एतस्य अङ्कस्य विशेषाः सम्पुटः - २२ जून् - २००३ सञ्चिका - ३



पुराणकथावली

२५



स्वास्थ्यरहस्यम्
(वेतालकथा)

१९



मायासरोवरः - १५

१३



विघ्नेश्वरः - १८

४५



## अन्तरङ्गम्



**SUBSCRIPTION**

**For USA and Canada**
**Single copy $2**
**Annual subscription $20**
***Remittances in favour of***
***Chandamama India Ltd.***
**to**
**Subscription Division**
CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony,
Ekkatuthangal, Chennai - 600 097
E-mail : subscription@chandamama.org

**उपायनीक्रियताम्**
वायुयानेन भारतेतरदेशान् प्रति
वार्षिकं (१२ सञ्चिकाः) - रू.९००/-
भारते रू. १२०/- (बुक्पोस्ट् द्वारा)
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited'
नाम्ना प्रेषणीयम् ।



*संस्थापकौ –*
**चक्रपाणिः नागिरेड्डी च**

# स्वप्नदर्शनाय निमन्त्रणम्

अल्पवयस्कानां भ्रातृणां भगिनीनां सत्सदृशानां च निमित्तं *'जूनियर् चन्दमामा'* इत्येतस्य प्रकाशनस्य 'नवः प्रयत्नः' आरब्धः अस्ति इति भवन्तः सर्वे जानीयुः एव । 'नवः प्रयत्नः' इति यद्यपि उक्तं, तथापि तत् निर्देशम् अर्हति 'साहसकार्यम्' इति । कथानां प्रश्नादिविवरणानां च द्वारा मातृभूमेः परम्परायाश्च परिचयः कारणीयः, चित्राणां लेखानां च द्वारा बालाः अभिप्रेरणीयाः, अल्पवयस्कानां बालानां पुरतः अर्थपूर्णं किमपि साहित्यम् उपस्थापनीयम् इत्येतेन उद्देशेन एषा योजना आरब्धा । एतस्य उद्देशस्य साकारीकरणाय कश्चन समर्पितचित्तः गणः कार्यं करोति ।

भारतसर्वकारस्य राष्ट्रपतिः श्री ए.पि.जे. अब्दुल्कलामवर्यः गतस्य एप्रिल्मासस्य दशमे दिनाङ्के नवप्रकाशनस्य एतस्य प्रथमसञ्चिकां यदा स्वीकृतवान् तदा अस्माकं विचारस्य महती पुरस्कृतिः लब्धा इति वक्तुं शक्यम् । सः एतं नवप्रकाशनप्रयत्नं ससन्तोषं स्वागतीकुर्वन् आशंसितवान् यत् प्रयत्नोऽयं लघुबालानां मनसि नूतनाम् अभिप्रेरणां दद्यात् इति । स्वप्नशीलतायाः प्राधान्यं सः यत् प्रतिपादितवान् तत् तु अस्मासु विशेषपरिणामम् अजनयत् । बालाः यदा स्वप्नदर्शनक्रमं जानन्तः प्रेरणायुक्ताः भवन्ति, महतः स्वप्नस्य साकारतायै ते यदा धैर्यं सहनां च प्राप्नुवन्ति, तदा एव तेषाम् उज्ज्वलं भविष्यम् अनुमातुं शक्नुयाम वयम् ।

राष्ट्रपतेः कथनस्य आशयस्य अनुसरणाय वयं निष्कपटप्रयत्नं कुर्याम । उज्ज्वलस्य उदर्कस्य निमित्तं सामूहिकतया यदा स्वप्नः दृश्येत तदा एव अस्माकं वैयक्तिकजीवने अपि सन्तोषः विलसेत् ।

---

**Visit us at : http://www.chandamama.org**

*सम्पादकः* – **विश्वम्**





भारतनायकस्पर्धायां भागम् ऊढ्वा प्राप्नुवन्तु अपूर्वाणि पारितोषिकाणि

# भारतीयाः नायकाः-२१

भारते शास्त्रीयसङ्गीतस्य समृद्धा परम्परा अस्ति ताम् अधिकृत्य अधः केचन प्रश्नाः दत्ताः सन्ति । उत्तरं दातुं प्रयतन्ताम् ।

**समुचितोत्तरदातारः त्रयः पुरस्क्रियन्ते द्विचक्रिकादानेन**

1. कर्णाटकसङ्गीतपरम्परायां ख्यातेषु अहम् एव अल्पवयस्कः । पूर्वम् अहं वीणावादकः आसम् । मया संस्कृतगीतानां कृते पाश्चात्यरागः योजितः । मम नाम किम् ?

.....................................................................

2. मया कर्णाटकसङ्गीतक्षेत्रे हिन्दुस्तानीसङ्गीतक्षेत्रे च गीतानि रचितानि । अहं तिरुवनन्तपुरस्य राजा आसम् । अहं कः ?

.....................................................................



3. अहं द्रुपदगायकत्वेन ख्यातः । ग्वालियर्राजस्य मानसिंहतोमर-वर्यस्य आस्थानविद्वान् आसम् । मम नाम किम् इति किं भवन्तः जानन्ति ?

.....................................................................

4. अहं भक्तिकविः । (१४८४-१५६४) मया प्रादोनपञ्चलक्षाधिकानि (४,७५,०००) भक्तिगीतानि रचितानि । मम नाम किम् ?

.....................................................................

5. १४२४ तमे जातः अहं १५०३तमवर्षपर्यन्तं जीवितवान् आसम् । तिरुपतेः वेङ्कटेश्वरम् अधिकृत्य मया ३२,००० गीतानि रचितानि । मम नाम किम् ?

.....................................................................

प्रतिप्रश्नम् उत्तरं लिखन्तु । एतेषु पञ्चसु नायकेषु प्रियतमः कः किमर्थं च इति दशभिः शब्दैः लिखन्तु । **मम प्रियतमः नायकः** .....................................................................

.....................................................................

.....................................................................

.....................................................................

भागग्रहीतुः नाम .....................................................................

वयः ........................ कक्ष्या ..........................................

सङ्केतः .....................................................................

.....................................................................

.....................................................................

पिन् ........................ दूरवाणी ........................

एवं पुटं पृथक्कृत्य प्रेषयन्तु अधोनिर्दिष्टसङ्केताय -

**भारतनायकस्पर्धा-२१**
चन्दमामा इण्डिया लिमिटेड्,
८२, डिफेन्स् आफीसर्स् कालोनी
एक्काटुतङ्गल्, **चेन्नै - ६०० ०९७**
उत्तरप्रेषणाय अन्तिमदिनाङ्कः - ५, **जुलै, २००३**

***नियमाः*** -

१. अधिकाष्ट-ऊनचतुर्दशवर्षीयाः एतस्यां स्पर्धायां भागं ग्रहीतुम् अर्हन्ति ।
२. विविधभाषाभिः प्रेषितानि उत्तराणि परिशील्य त्रयः श्रेष्ठाः चीयन्ते । यदि योग्योत्तरदातारः बहवः तर्हि प्रियतमनायकविषये लिखितं वाक्यम् अवलम्ब्य चयनं क्रियते ।
३. निर्णायकानां निर्णयः एव अन्तिमः ।
४. एतं विषयम् अधिकृत्य पत्रव्यवहारः कोऽपि न करणीयः ।
५. विजेतारः पत्रद्वारा सूच्यन्ते ।



# FIRST COPY FOR THE FIRST CITIZEN



April 10, 2003, was a red-letter day for **Chandamama,** when the First copy of the first issue of ***Junior Chandamama*** was presented to His Excellency **Dr. A.P.J. Abdul Kalam,** President of India, who has endeared himself as a trusted friend of the children of India. He graciously accepted the magazine from the publishers who had called on him that evening. He was very appreciative of the publication and blessed the bold venture, launched after providing healthy reading for children for 56 years.





# शिल्पसुन्दरी

महाराजः चन्द्रशेखरः देवगिरिराज्यस्य शासकः । सः शासनदक्षः राजा । कलाप्रियः अपि आसीत् सः । कलात्मकवस्तुषु कलाकारेषु च विशेषप्रीतिः आसीत् तस्य । बहून् कलाकारान् सम्मानितवान् आसीत् सः । देशविदेशेभ्यः कलाकृतीः क्रीत्वा कलामन्दिरे संरक्षितवान् आसीत् । एतां कलासम्पत्तिं द्रष्टुं दूरप्रदेशेभ्यः अपि जनाः आगच्छन्ति स्म, राज्ञः कलाप्रियतां प्रशंसन्ति स्म च ।

महाराजः इच्छति स्म यत् कलामन्दिरस्य व्यवस्थानिर्वहणाय अभिवृद्धये च कश्चन अधिकारी नियोक्तव्यः इति । अतः सः एतां वार्ताम् उद्घोषणद्वारा राज्ये प्रसारितवान् ।

एतां घोषणां श्रुत्वा बहवः कलाकाराः तस्य स्थानस्य प्राप्तये आगताः । राजा तेषां नैपुण्यस्य परीक्षां कृतवान् । अन्ते त्रयः चिताः - माधवः, सागरः, आनन्दश्चेति । तेषु कश्चित् एकः चेतव्यः आसीत् ।

महाराजः तान् कलामन्दिरं नीत्वा काञ्चित् शिलासुन्दरीं दर्शयित्वा अवदत् - ''यः अधिकधनं ददाति सः एतस्य शिल्पस्य स्वामी भवितुम् अर्हति'' इति ।

तदा माधवः अवदत् - ''महाराज ! एतस्य निमित्तम् अहं मम समग्रां सम्पत्तिम् एव दातुं सिद्धः'' इति । सागरः अपि एवमेव अवदत् ।

किन्तु आनन्दः अवदत् - ''महाराज ! कला सर्वेषाम् आनन्दजननी भवेत् । स च आनन्दः कस्यचित् एकस्यैव न भवेत् । एषा शिल्पसुन्दरी यदि कलामन्दिरे एव भवेत् तर्हि प्रतिदिनं सहस्रशः कलाप्रियाः आगत्य एतां दृष्ट्वा आनन्दनिर्भराः भवेयुः'' इति ।

महाराजः नितरां सन्तुष्टः सन् आनन्दस्य स्कन्धे प्रीत्या हस्तं संस्थाप्य अवदत् - ''भवादृशः कलाकारः एव मया इष्टः । कलामन्दिरस्य अधिकारी भवितुं भवान् एव योग्यः'' इति ।



# पिशाचयोः पुण्यकार्यम्

पुरातने काले गोपवरनामके ग्रामे माधवः नाम कश्चित् युवकः वसति स्म । सः अष्टादशवर्षीयः । तथापि सः श्वेतं सर्वं वस्तु क्षीरमिति भावयति स्म । बाल्ये एव तस्य पितरौ दिवङ्गतौ आस्ताम् । अतः पितामही एव तस्य पालनं कृतवती । किन्तु सा अपि यदा दिवङ्गता तदा माधवः अनाथः सञ्जातः ।

अनाथः सन् माधवः धनिकानां गृहेषु यथाशक्ति कार्याणि कुर्वन् तैः दीयमानेन आहारेण दिनानि यापयति स्म । सः गाः चारणार्थं समीपस्थं वनं नयति स्म । तस्य मनसि 'अहं विना वेतनं कार्यं कुर्वन् अस्मि' इति दुःखमपि न आसीत् ।

कदाचित् प्रतिदिनमिव पशून् चारयन् माधवः पशुभिः सह इतस्ततः सञ्चरन् गीतं गायन् अटति स्म । एतादृशं तं वृक्षस्य उपरि शयानः कश्चन पिशाचः अपश्यत् । समीपस्थं नूतनतया आगतम् अन्यं पिशाचं एषः पिशाचः अवदत् – ''पश्यतु । तस्य युवकस्य कण्ठः अहो, कियन्मधुरः ! तस्य गीतं श्रुतवतः मम बुभुक्षा शान्ता अभवत्'' इति ।

तदा सः नूतनः पिशाचः – ''सः पार्श्वग्रामस्थः । तस्य नाम माधवः इति । अनाथः सः गुणवान् मृदुस्वभावः च । अतः एव तदीयग्रामस्थाः निर्वेतनं कार्यं कारयन्ति'' इति वदन् तस्य विषये इतोऽपि अनेकान् अंशान् उक्तवान् ।

तस्य पिशाचस्य वचनं श्रद्धया श्रुतवान् सः प्राचीनः पिशाचः ततः नूतनं पिशाचम् अवदत् – ''भवतः वचनस्य श्रवणेन मम



मनसि कश्चन विचारः आगतः । पापकर्म कृत्वा वयं पिशाचाः अभवाम । अस्मात् जन्मनः मुक्तिं प्राप्तुं पुण्यकार्याणि करणीयानि अस्माभिः । अतः वयं माधवस्य किमपि साहाय्यं करवाम'' इति ।

तदा सः नूतनः पिशाचः अपृच्छत् - ''माधवस्य कीदृशं साहाय्यं कर्तुं शक्येत ?'' इति ।

एतत् श्रुत्वा प्राचीनः पिशाचः सोत्साहम् - ''अहं कश्चन उपायं जानामि । आगच्छतु मया सह'' इति वदन् नूतनपिशाचेन सह वृक्षतः अवतरणं कृतवान् ।

ततः प्राचीनः पिशाचः स्वस्य चिन्तनानुगुणं सुवर्णनाणकैः पूरितम् एकं स्यूतम् अधः पातितवान् । गायन् माधवः तस्यां दिशि एव आगतः । सः एतं स्यूतम् उन्नीय उद्घाट्य अपश्यत् । स्यूते स्थितानि सुवर्णनाणकानि दृष्ट्वा आश्चर्यचकितः सः उच्चस्वरेण अवदत् - ''अहो । एतावन्ति सुवर्णनाणकानि !'' इति । ततः तेन चिन्तितं यत् एषः स्यूतः कस्यापि अदृष्टहीनस्य स्यात्, अहम् एतं स्यूतं ग्रामाधिकारिणे दास्यामि, सः अस्य धनस्य स्वामिनम् अन्विष्य तस्मै एतत् दद्यात् इति । एवं चिन्तयन् सहः तं सुवर्णस्यूतम् उष्णीषे संस्थाप्य बद्धवान् ।

एतत् दृष्ट्वा सः प्राचीनः पिशाचः - ''एषः एतावान् मुग्धः इति मया न ज्ञातम् एव । इदानीम् एषः एतं स्यूतं ग्रामाधिकारिणे दास्यति'' इति सविषादम् अवदत् ।

तस्य वचनं श्रुत्वा नूतनः पिशाचः अवदत् - ''यदा भवता धनस्यूतः पातितः तदा एव मया चिन्तितं यत् एवमेव घटते इति'' इति ।

''तर्हि अस्य साहाय्यं कथं कर्तुं शक्येत ?'' इति प्राचीनः पिशाचः अपृच्छत् ।

''माधवः दृढकायः । तस्य अङ्गवैकल्यं किमपि नास्ति । कार्यमपि श्रद्धया करोति सः । एतादृशाय युवकाय सुवर्णदानं, धनदानं वा न समीचीनम् । यतः अनेन तस्य सरलाः गुणाः सर्वे नष्टाः भवेयुः । रत्नादिकं सर्वं जडात्मकम् । अतः अस्मै कस्यापि मानवस्य सहयोगः दापनीयः । तादृशं यदि आवां कुर्याव तर्हि वरं स्यात् । यस्य सहवासेन एषः युवकः सुखेन आत्मविश्वासेन च जीवनं यापयेत् तादृशस्य कस्यचन स्नेहः यदि अस्य भविष्यति तर्हि निश्चयेन वरं भवेत्'' इति नूतनपिशाचः अवदत् ।

अनेन नितरां कुपितः प्राचीनः पिशाचः -

''एतादृशीः नीतीः सर्वाः अहम् अपि जानाम्येव । वदतु, कीदृशं साहाय्यं करणीयम् इति'' इति कोपेनैव अवदत् ।

''अहं सर्वं वदामि । आदौ भवान् धनिकवेषेण तस्य समीपं गत्वा – 'एषः स्यूतः मम' इति उक्त्वा तं स्यूतम् आनयतु'' इति नूतनः पिशाचः अवदत् ।

तदनुगुणं सः पिशाचः धनिकवेषं धृत्वा गत्वा स्यूतम् आनीतवान् । तदा नूतनः पिशाचः – ''मया उच्यमानं श्रद्धया शृणोतु ! माधवस्य ग्रामे कान्तामणिनाम्नी काचन सुन्दरी वसति । तस्याः पिता मृतः । चतुर्दिनाभ्यन्तरे तस्याः विवाहः भविष्यति । किन्तु तस्यै निश्चितः वरः मद्यपः द्यूतासक्तः च । सः महाचोरः अपि । एकदा चौर्यावसरे सः सैनिकैः गृहीतः आसीत् । किन्तु उपायेन ततः पलायितवान् आसीत् सः ! तस्य वरस्य मातुलः तस्य विवाहं कान्तामण्याः ग्रामे एव कर्तुं व्यवस्थां कृतवान् अस्ति । विवाहः यदि स्वग्रामे भविष्यति तर्हि सैनिकाः आगत्य तं गृह्णीयुः इति भीतिः तस्य । अस्मात् भयकारणात् एव वरपक्षीयाः दशभ्यः दिनेभ्यः पूर्वमेव कान्तामण्याः गृहम् आगताः सन्ति । सैनिकैः एतत् ज्ञातम् अस्ति । अतः ते तं ग्रहीतुं तं ग्रामं प्रति प्रस्थिताः सन्ति । अस्मिन् अवसरे आवाभ्याम् एवं करणीयम्'' इति उक्त्वा प्राचीनस्य पिशाचस्य कर्णे किमपि उक्तवान् ।

अपरक्षणे तयोः अन्यतरः पिशाचः अश्वरूपं धृतवान् । अपरः चोरः इव नटन् तस्मिन् मार्गे अटन् आसीत् ।

सैनिकाः दण्डान् चालयन्तः तत्र आगताः ।



तैः मार्गे कश्चन अश्वः, कश्चन चोरश्च दृष्टः । तेन ते सन्तोषेण उद्घोषितवन्तः – ''चोरः लब्धः !'' इति ।

ततः – ''अये, वञ्चक ! ग्रामप्रमुखस्य एव गृहे चौर्यं कृतवतः भवतः कियत् धैर्यम्'' इति वदन्तः तं ग्रहीतुम् उद्युक्ताः । तावति काले सः चोररूपी पिशाचः झटिति अश्वरूपं पिशाचम् आरुह्य ग्रामं प्रति धावनम् आरब्धवान् । सैनिकाः तम् अनुसरन्तः यत्र विवाहकार्यक्रमः प्रचलन् आसीत् तं प्रदेशम् आगताः ।

एतावता तौ पिशाचौ रूपपरिवर्तनं कृत्वा तत्र स्थितायाः कस्याश्चन वरपक्षीयायाः वृद्धायाः शरीरं प्रविष्टवन्तौ । सैनिकान् दृष्ट्वा सा वृद्धा – ''भवन्तः वरपक्षीयाः, उत वधूपक्षीयाः'' इति पृष्टवती ।

अनेन प्रश्नेन कुपितः कश्चन सैनिकः – ''वयं सैनिकाः । चोरेभ्यः ऋते, अन्ये सर्वेऽपि अस्माकं बान्धवाः एव'' इति वदन् तत्र स्थितं वरं दृष्ट्वा – ''कोटगिरिप्रदेशस्य कपिलेश्वरस्य पुत्रः कमलेशः खलु भवान् ? ग्रामप्रमुखस्य गृहे कृतस्य चौर्यस्य निमित्तं बन्धिनं कृत्वा भवन्तं नेतुम् आगताः वयम्'' इति अवदत् ।

एतत् श्रुत्वा कमलेशस्य पिता कपिलेश्वरः – ''मम पुत्रः चोरः इति अहं न जानाम्येव । तथापि प्रथमं वध्वाः माङ्गल्यधारणकार्यक्रमः समाप्तः भवतु । ततः वार्तालापं करिष्यामः'' इति उक्तवान् ।

कपिलेश्वरस्य एतत् वचनं श्रुत्वा द्वौ सैनिकौ हसन्तौ – ''पिता पुत्रश्च केवलेन चौर्येण न सन्तुष्टौ, अपि तु कस्याश्चित् कन्यायाः जीवनम् अपि नाशयन्तौ स्तः । अलम् एतेन प्रयत्नेन । इदानीम् अस्माभिः सह आगच्छताम्'' इति वदन्तौ, तौ बन्धिनौ कृत्वा नीतवन्तौ ।

गृहे शोकमयं वातावरणं जातम् । तदा वृद्धायाः देहे प्रविष्टः पिशाचः वध्वाः मातरं सान्त्वयन् उक्तवान् – ''किमर्थं रोदनम् ? पितापुत्रयोः वास्तविकं रूपं ज्ञातम् । भवत्याः पुत्र्याः योग्यं वरम् अहं सूचयामि । माधवं भवती जानाति एव । यद्यपि सः न धनिकः, तथापि गुणवान् । अलसः न, श्रमजीवी । भवत्याः पुत्र्याः विवाहः अनेन सह यदि भविष्यति तर्हि सः भवताम् उपकारकः भवेत् । विना क्लेशं भवत्याः पुत्र्याः जीवनं सुखमयं भविष्यति । वदतु, एषः निर्णयः किं न योग्यः ?'' इति ।

सर्वेऽपि तस्य पिशाचस्य वचनस्य समर्थनं कृतवन्तः । वधूः कान्तामणिरपि अश्रूणि परिमार्जयन्ती – ''अहमपि जानामि । माधवः गुणवान् । मम विवाहं यदि सः अङ्गीकुर्यात् तर्हि अहम् आत्मानं भाग्यवतीं भावयेयम्'' इति उक्तवती ।

माधवः तस्मिन् समये तत्र आगतवान् । अतिथीनां सत्कारे निरतः आसीत् सः । जनाः आगत्य तम् एतां विवाहवार्ताम् उक्तवन्तः । क्षणं यावत् सः दिङ्मूढः अभवत् आश्चर्येण । ततः स्वस्य अङ्गीकारं सूचयन् सः कान्तामण्याः पाणिग्रहणं कृतवान् । सर्वेऽपि सन्तुष्टाः सन्तः आशीर्वादं कृतवन्तः ।

एतं विवाहं दृष्ट्वा सन्तुष्टौ तौ पिशाचौ – 'आवाभ्यां पुण्यकार्यं कृत्वा पुण्यं सम्पादितम्' इति चिन्तयन्तौ ततः मौनेन प्रतिगतवन्तौ ।





# मायासरोवरः

## १९

*[हंसरथस्य उपरि आक्रमणं कृतवतः जलवृकराक्षसान् जयशीलः तदनुचराः च संहृतवन्तः । मायासरोवरेश्वरः काञ्चनमाला च यस्मिन् अरण्यप्रदेशे पतितौ तत्र श्वेता धूमरेखा दृष्टा । सर्वे तस्यां दिशि प्रस्थितवन्तः । तदनन्तरम् ....]*

हंसरथः यदा अधोमुखः जातः तदा मायासरोवरेश्वरः, काञ्चनमाला, रथस्य सारथिः च अरण्ये विभिन्नेषु स्थानेषु पतिताः । मायासरोवरेश्वरेण तु कश्चन विलक्षणः अनुभवः प्राप्तः ।

मायासरोवरेश्वरः हंसरथात् यत्र पतितः तत्र नरभक्षकजनाः निवसन्ति स्म । तैः आ सप्ताहात् मृगयायाम् एकः अपि पशुः न प्राप्तः आसीत् । तत्र कारणं – ते यत्र मृगयां कुर्वन्तः आसन् तत्र व्याघ्राणां कश्चन गणः उपस्थितः आसीत् । सः सर्वान् वन्यपशून् मारयित्वा खादितवान् आसीत् । केचन मृगाः तेषां गर्जनं श्रुत्वा भीताः जाताः आसन्, अतः समीपस्थं पर्वतम् अतिक्रम्य दूरं गताश्च आसन् ।

नरभक्षकाणां नायकस्य नाम शूरसिंहः इति । तेन ज्ञातम् आसीत् यत् केचन अनुचराः गणं परित्यज्य गमनाय उद्युक्ताः सन्ति इति । सः अचिन्तयत् यत् पूर्वजाः यत्र आ शतकेभ्यः वासं कृतवन्तः तस्य प्रदेशस्य त्यागः न श्रेयसे इति । 'यदि वयं सर्वे एतं प्रदेशं परित्यज्य



गच्छेम तर्हि वटवृक्षस्य अधः स्थितस्य देवालयस्य अधिदेवतायै वर्षे एकवारं वा नरमांसं को वा अर्पयेत् ? यदि तस्याः पूजायां च्युतिः भवेत् तर्हि तस्य फलं मया मदनुचरैः च अनुभोक्तव्यं भवेत्' इति विचारः तस्य मनसि आगतः ।

अतः मज्जातीयाः एतं प्रदेशं कथमपि यथा न त्यजेयुः तथा कोऽपि उपायः आश्रयणीयः मया इति सः निर्णीतवान् । 'एतदर्थं शक्तिं ददातु' इति आराध्यदेवतां प्रार्थयितुम् इच्छन् सः वटवृक्षस्य अधः स्थितं शिथिलालयं प्रति प्रस्थितवान् ।

तत् च अतिपुरातनं मन्दिरम् । तस्य द्वारं न आसीत् । वृष्टिकाले वृष्टितः आत्मनः रक्षणाय वन्यपशवः रात्रौ तत् मन्दिरम् आश्रयन्ति स्म ।

शूरसिंहः सूर्योदयकाले यदा शिथिलालयं गतवान् तदा तत्र एकं विलक्षणं दृश्यं दृष्टि-गोचरं जातम् । देवतामूर्तेः पुरतः कश्चन महान् अजगरः कश्चित् अजम् आवृत्य गृहीतवान् आसीत् । किन्तु आश्चर्यं नाम तदीयं मुखम् अजस्य मुखे आसीत् ।

एतत् दृश्यं दृष्ट्वा शूरसिंहः नितराम् आश्चर्य-चकितः । दिग्भ्रान्तः सः क्षणकालं मौनेन अतिष्ठत् । ततः सः आत्मनि धैर्यं धृत्वा देवतां साष्टाङ्गं प्रणम्य अवदत् - ''अम्ब ! भवत्याः महिमा अतिविचित्रः । सप्ताहात् वयं बुभुक्षया पीड्यमानाः स्मः । वयं भवत्याः भक्ताः । किन्तु अस्मासु भवत्याः कृपा न दृश्यते । एतत् अपूर्वं दृश्यं दर्शयन्ती भवती अस्मान् किम् आदेष्टुम् इच्छति ?'' इति ।

क्षणकालानन्तरं कश्चन वन्यः मार्जारः शिथिलभित्तेः रन्ध्रतः स्वस्य मुखम् अन्तः आनीय 'म्यावँ, म्यावँ' इति ध्वनिम् अकरोत् ।

'एतत् तु अपूर्वं दृश्यम् । एतस्य तात्पर्यं किम् इति गणाचार्यः एव वक्तुम् अर्हति, न अन्यः' इति स्वगतं वदन् सः स्वजातिबान्धवान् आह्वयन् तेषां समीपम् आगतवान् ।

तत्समये नरभक्षकाः सर्वे अरण्ये कस्मिंश्चित् समतले प्रदेशे उपविश्य 'बुभुक्षानिवारणाय कन्दमूलफलादीनि एव किम् अस्माभिः खादनीयानि भवेयुः' इत्येतं विषयम् अधिकृत्य चर्चां कुर्वन्तः आसन् । शूरसिंहः तेषां समीपम् आगत्य उच्चस्वरेण अवदत् - ''अरण्यदेवता अस्मासु कृपां प्रदर्शितवती अस्ति । गणाचार्यः कुत्र अस्ति इदानीम् ?'' इति ।

सर्वे नरभक्षकाः आश्चर्येण स्वनायकस्य मुखं दृष्टवन्तः । ते भावितवन्तः यत् मन्दिर-समीपे हरिणानां वराहाणां वा गणः दृष्टि-

गोचरः जातः स्यात् इति । अतः नरभक्षक-जातीयाः तरुणाः केचन उत्साहेन उत्थाय शूर-सिंहसमीपम् आगत्य पृष्टवन्तः – ''मान्यवर ! अरण्यदेवतायाः मन्दिरस्य समीपे हरिणानां सूकराणां वा गणः तु आगतः न स्यात् खलु ? तेषां मारणाय किम् अस्माभिः सर्वैः खड्गशूलादयः आनेतव्याः ? अस्माकम् आहाररूपेण भगवती वन्यदेवी तान् प्रेषितवती स्यात् खलु ?'' इति ।

शूरसिंहेन तत्प्रदेशे गणाचार्यः कुत्रापि न दृष्टः । अतः सः असन्तोषेण तान् अवदत् – ''अये मूर्खाः ! अहं पृच्छामि किञ्चित् । भवन्तः वदन्ति अन्यत् एव । वृद्धः गणाचार्यः क्व गतः ? वन्यदेवतायाः मन्दिरे मया यत् दृष्टं तस्य गूढार्थः कोऽपि स्यात् एव । तं विवरीतुं समर्थः अस्ति अस्माकं गणाचार्यः एकः एव । अतः भवन्तः तम् अविलम्बेन आनयन्तु अत्र'' इति ।

गणाचार्यः ततः अनतिदूरे कस्यचित् वृक्षस्य अधः उपविष्टः आसीत् । महती बुभुक्षा तं शक्तिहीनं कृतवती आसीत् । यदा केचन युवकाः तत्समीपम् आगत्य शूरसिंहस्य सन्देशं श्रावितवन्तः तदा सः झटिति उत्थाय शूरसिंहस्य समीपम् आगतवान् ।

शूरसिंहः मन्दिरे प्रवृत्तं सर्वं तं निवेद्य – ''गणाचार्यवर्य ! मया दृष्टस्य दृश्यस्य कः अर्थः ? देवता अस्मासु कृपादृष्टिं प्रसारितवती अस्ति, अचिरात् एव अस्माभिः पर्याप्ततया मांसं प्राप्यते इति खलु तस्य आशयः ?'' इति अपृच्छत् ।

गणाचार्यः एतत् अशृण्वन् इव कष्टेन



अवदत् – ''अर्चकरूपेण कार्यं कुर्वतः मम केशाः एतावता एव श्वेताः जाताः । मम अनुभवः वदति यत् देवता कदापि स्पष्टतया किमपि न वदति इति । सर्वं भवति रहस्य-मयम् । मम तु भाति यत् अन्यवनजातीयैः इव अस्माभिः अपि यत् लब्धं तत् खाद्यते चेत् एव वरं स्यात् इति'' इति ।

यदा गणाचार्येण एवम् उक्तं तदा कुपितः शूरसिंहः पार्श्वस्थस्य तरुणस्य हस्ते स्थितं दण्डं बलात् आकृष्य तेन गणाचार्यं प्रहरन् – ''अये वृद्ध ! किम् एतत् उच्यते भवता ? अस्मज्जातीयैः मांसात् ऋते अन्यत् किमपि न खादनीयम् इत्येतत् किं भवता विस्मृतम् ?'' इति कोपेन अपृच्छत् ।

प्रहारं प्राप्य गणाचार्यः झटिति उत्थाय केशान् विकीर्य – ''हे वन्यदेवते ! जयोऽस्तु ते । शूरसिंह ! भवतः प्रहारतः मम बुभुक्षा



सर्वथा उपशान्ता । तत्र किं प्रवृत्तम् इति विस्तरेण वदतु । मयि आनन्दः वर्धमानः अस्ति'' इति वदन् मर्कटः इव वृक्षशाखां गृहीत्वा लम्बमानः अतिष्ठत् ।

शूरसिंहस्य आदेशानुसारं द्वित्राः तरुणाः गणाचार्यस्य पादौ गृहीत्वा आकृष्य तं भूमौ स्थापितवन्तः । तदा शूरसिंहः मन्दिरे प्रवृत्तं सर्वं पुनरपि तस्य पुरतः विवृतवान् ।

गणाचार्यः शूरसिंहस्य वचनं श्रद्धया श्रुतवान् । क्षणकालम् आकाशं पश्यन् किमपि चिन्तितवान् । ततः अवनम्य मुष्टिमितां मृत्तिकां स्वीकृत्य मन्त्रं पठन् तत्र सर्वत्र विकीर्णवान् । ततः तत्रत्यान् सः अवदत् - ''अत्र समतल-प्रदेशे अग्निं प्रज्वाल्य भाण्डे जलम् उष्णी-कुर्वन्तु । केचन मन्दिरं गत्वा तम् अजगरम्, अजं, मार्जारं च अविलम्बेन अत्र आनयन्तु'' इति ।

''सः मार्जारः एतावत्पर्यन्तम् अपि अस्मान् प्रतीक्षमाणः तत्रैव उपविशेत् इति मम तु न भाति । अजगरः सर्पः वा एतावता स्वस्य प्रतिस्पर्धिनं मारितवान् स्यात् एव । तथापि अहं तत्र गत्वा यः एतावता जीवति तम् अत्र आनेष्यामि'' इति उक्त्वा ततः गन्तुम् उद्युक्तः शूरसिंहः ।

''यदि सः मार्जारः न प्राप्येत तर्हि सा शिला वा भवता आनेतव्या, यत्र च सः उपविष्टः आसीत् । तां शिलाम् एव क्वथति जले स्थापयिष्यामः वयम्'' इति अवदत् गणाचार्यः ।

''वन्यदेवता स्वस्य मन्दिरे किमर्थम् एतादृशं दृश्यं दर्शितवती ? किम् अचिरात् एव अस्माभिः पर्याप्ततया मांसं प्राप्येत ?'' इति कुतूहलेन पृष्टवान् शूरसिंहः ।

एतं प्रश्नं श्रुत्वा गणाचार्यः केशान् कम्पयन् - ''अहं का इति किं न ज्ञायते ? अहमस्मि वन्यदेवता । यदि मम कृपा स्यात् तर्हि पशूनां किं, मानवानाम् एव मांसं प्राप्येत भवद्भिः । किन्तु आदौ मम आदेशः पालनीयः भवद्भिः'' इति अवदत् ।

एतत् श्रुत्वा ते नरभक्षकजातीयाः समतले प्रदेशे किञ्चित् खात्वा एकां चुल्लीं निर्मितवन्तः । तदुपरि तैः जलभाण्डं स्थापितम् । भाण्डं जलेन पूरितं तैः । केचन काष्ठानि सङ्गृह्य चुल्ल्यां स्थापयित्वा अग्निं योजितवन्तः । अचिरात् एव श्वेता धूमरेखा आकाशं प्रति निर्गता ।

तस्मिन् एव समये गृध्राः मायासरोवरेश्वरस्य हंसरथस्य उपरि आक्रमणं कृतवन्तः । भीतानां

हंसानाम् इतस्ततः गमनात् रथः अधोमुखः जातः । अङ्गरक्षकः रथं दृढतया गृह्णन् स्वस्य पतनं निवारयितुं समर्थः जातः । किन्तु रथस्य सारथिः, मायासरोवरेश्वरः, कनकाक्षराजस्य पुत्री काञ्चनमाला च रथात् अधः अपतन् एव ।

तस्मिन् समये वायुः वेगेन वाति स्म । अतः ते त्रयः अपि विभिन्नेषु स्थलेषु अपतन् । केशान् विकीर्य स्थितः गणाचार्यः आकाशात् पतन्तं मायासरोवरेश्वरं दर्शयन् महता उत्साहेन उच्चस्वरेण - ''तत्र पश्यन्तु तावत् । बुभुक्षया पीडितेषु अस्मासु वन्यदेवता कृपां प्रदर्शितवती दृश्यते । सा आहाररूपेण एकं मानवम् एव प्रेषितवती अस्ति । भाण्डस्थं जलं शीघ्रम् उष्णीकुर्वन्तु । एतस्य मानवस्य, अजगरस्य, अजस्य, मार्जारस्य च मांसम् आदौ वन्यदेवतायै नैवेद्यरूपेण अर्पणीयम् । ततः परम् अस्माभिः अरण्ये महता प्रमाणेन मांसं प्राप्यते'' इति अवदत् ।

हंसरथतः मायासरोवरेश्वरः अपतत् यत् तत् तु महतः दौर्भाग्यस्य एव विषयः । किन्तु भाग्यवशात् सः नरभक्षकजातीयैः उष्णीकर्तुं स्थापिते जलभाण्डे एव अपतत् । सकृत् जले निमज्जनं प्राप्य सः उपरि आगतवान् । ततः जलभाण्डस्य पार्श्वभागं गृहीत्वा सः परितः दृष्टिं प्रसारितवान् । परितः तेन नरभक्षक-जातीयाः दृष्टाः । तेषां दर्शनतः सः नितरां भीतः ।

वृद्धः गणाचार्यः मन्दहासपूर्वकं तत्समीपम् आगत्य अवदत् - ''अरण्यदेवतया अस्माकम् आहाररूपेण मानवः प्रेषितः । सोऽपि



पुष्टकायः, न तु दुर्बलशरीरः । प्रभूतं मांसम् अस्ति एतस्य शरीरे । अस्माकं श्रमस्य निवारणाय सा एतं साक्षात् जलभाण्डे एव पातितवती अस्ति । अहो, सौभाग्यम् अस्माकम् !'' इति ।

गणाचार्यस्य कथनस्य श्रवणात् माया-सरोवरेश्वरः अवगतवान् यत् मया येषां मध्ये स्थितं ते सामान्याः वनजातीयाः न, अपि तु नरभक्षकाः इति । एतावता जलस्य उष्णता आरब्धा वर्धमाना च आसीत् । अतः सः भाण्डात् बहिः आगन्तुं विशेषप्रयत्नम् अकरोत् ।

तदा गणाचार्यः अग्नियुक्तम् एकं काष्ठं हस्तेन स्वीकृत्य दर्शयन् - ''अये, अरण्य-देवतया अस्माकं कृते आहाररूपेण प्रेषित मानव ! भाण्डात् बहिः आगमनाय भवता प्रयासः न करणीयः । यदि क्रियेत तर्हि साक्षात्

अग्नौ एव पातयिष्यामः वयं भवन्तम्'' इति भीतिम् अदर्शयत् ।

एतत् श्रुतवतः मायासरोवरेश्वरस्य मनसि अभासत यत् अद्य मम मरणं निश्चितम् इति । 'मरणं तु निश्चितं, तथापि एवं कथति जले मरणं नितरां पीडादायकं भवति । अतः कथञ्चित् इतः बहिः गमनाय उपायः चिन्तनीयः' इति चिन्तयतः तस्य मनसि कश्चन उपायः स्फुरितः । सः गणाचार्यं रहस्यं कथयितुम् उत्सुकः इव अभिनयं कृतवान् । सः मन्दस्वरेण उक्तवान् - ''भवान् वन्य-देवतायाः गणाचार्यः खलु ? किञ्चन रहस्यं वक्तव्यम् अस्ति मया । भवतः देवता मया सह अन्यौ उभौ अपि भवताम् आहाररूपेण प्रेषितवती अस्ति'' इति ।

तदा गणाचार्यः आश्चर्यम् अनुभवन् अपृच्छत् - ''एवं तर्हि तौ अन्यौ कुत्र ?'' इति ।

''तौ प्रायः मार्गम् अजानन्तौ अन्यत्र कुत्रापि अवतीर्णौ इति भाति । यदि भवान् आत्मना सह मां नयेत् तर्हि अहं तौ अन्विष्य भवदधीनौ कुर्याम्'' इति अवदत् मायासरोवरेश्वरः ।

गणाचार्यः तस्य वचने विश्वासं प्राप्तवान् । सः तं जलभाण्डतः बहिः आनायितवान् । ततः सः एकम् आदिष्टवान् - ''अत्र यद्यत् प्रवृत्तं तत्सर्वम् अरण्यदेवतामन्दिरे स्थितं शूरसिंहं वदतु'' इति । ततः सः चतुर्भिः तरुणैः, मायासरोवरेश्वरेण च सह अरण्यं प्रति प्रस्थितवान् ।

ते अरण्ये सर्वत्र अन्वेषणं कृतवन्तः । क्वचित् सारथेः कशा तैः दृष्टा । 'मम रथस्य सारथिः काञ्चनमाला च एतस्य एव वृक्षस्य शाखायां संलग्नौ स्याताम्' इति चिन्तयन् सः उपरि दृष्टिं प्रसारितवान् । वृक्षशाखायां तु कोऽपि न दृष्टः । किन्तु आकाशे गच्छन् हंसरथः दृष्टः तेन ।

तस्मिन् एव काले सिद्धसाधकः मकरकेतुः च धूमरेखाम् अनुसरन्तौ नरभक्षकाणां स्थलं प्रति गच्छन्तौ आस्ताम् । सिद्धसाधकः स्वस्य वाहनं नरवानरं प्रेरयन् उच्चस्वरेण अघोषयत् - 'जय महाकाल !' इति ।

एतं स्वरं श्रुत्वा मायासरोवरेश्वरः तेन सह स्थिताः च आश्चर्यचकिताः स्तब्धाः च ।

- *(अनुवर्तते)*



# वेताल-कथा

# स्वास्थ्य-रहस्यम्

दृढव्रती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शाखायां लम्बमानं शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् – ''अये राजन् ! भवतः परिश्रमं दृष्टवति मयि महती दया उत्पद्यते । स्वलाभार्थं परिश्रमं कृतवन्तः बहवः दृष्टाः मया । केचन अन्यस्य कस्यचित् निमित्तं कार्यम् आरब्धवन्तः दृष्टाः, किन्तु ते फलप्राप्तितः पूर्वम् एव कार्यात् निवृत्ताः जाताः । भवान् तु अन्यस्मै वचनं दत्त्वा तस्य पालनाय एतादृशं घोरं कष्टं वहति इति भाति मम । अपात्रे धनस्य दानम् इव अपात्रे वचनस्य दानम् अपि हानिकरम् । पूर्वं पुष्करः



अपात्रे दानात् हानिम् अनुभूतवान् आसीत् । भवतः मार्गायासस्य परिहाराय पुष्कर-विलासयोः कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा –

पूर्वं पुष्करः नाम कश्चन तरुणः आसीत् । सः महान्तं परिश्रमं तु करोति स्म, किन्तु उदरम्भरणाय अपि क्लेशम् अनुभवति स्म । स्वस्य हीनजीवनं स्मरन् सदा दुःखम् अनु-भवति स्म सः ।

कदाचित् विवाहमण्डपे तेन कार्यं प्राप्तम् । कूपात् जलस्य उद्धरणं, पात्रक्षालनम् इत्यादिकं तेन करणीयम् आसीत् । आदिनं तेन श्रमः करणीयः आसीत् । ये ये विवाहगृहम् आगच्छन्ति ते गृहजनैः सादरं स्वागतीक्रियन्ते स्म, भोज्यन्ते स्म च । भोजनपदार्थाः स्वादु-युक्ताः भवन्ति स्म । यः तान् खादति स्म सः तेषां प्रशंसां करोति स्म एव । पुष्करेण अपि क्वचित् ते भोजनपदार्थाः प्राप्यन्ते स्म । अतः स्वस्य कार्यं महता उत्साहेन कृतवान् सः ।

सः पाचकान् प्रशंसन् उक्तवान् – ''भवन्तः स्वादूनि खाद्यानि निर्मान्ति । प्रतिदिनं कुत्रचित् वा भवद्भिः पाककार्यं प्राप्येत एव । माम् अपि आत्मना सह नयन्तु भवन्तः । भवन्तः यत् कार्यं वदन्ति तदहं श्रद्धया करिष्यामि । पूर्णोदरं भोजनं मया सदा प्राप्स्यते । किम् एतत् अनुमन्यते भवद्भिः ?'' इति ।

तदा पाचकप्रमुखः हसन् अवदत् – ''भवान् भोजनप्रियः इव भाति । अस्माभिः सह आगमनेन भवतः इच्छायाः पूर्तिः न भवेत् । यतः प्रतिदिनं वयं पाककार्यं न प्राप्नुमः । अन्यच्च, यदा पाककार्यं प्राप्यते तदा साहाय्यार्थं स्थानीयान् एव कर्मकरान् स्वीकरिष्यामः । अतः भवतः आवश्यकता नास्ति अस्माकम् । स्वादुभोजनं प्राप्तव्यं चेत् धनिकगृहे जन्म प्राप्तव्यम्'' इति ।

धनिकानां गृहे प्रतिदिनं स्वादु भोजनं भवति इति ऐदम्प्राथम्येन श्रुतवान् आसीत् पुष्करः । अतः सः एतत् श्रुत्वा महत् आश्चर्यं प्राप्तवान् । तस्य मुखभावं दृष्ट्वा पाचकप्रमुखः अवदत् – ''किं भवता कदापि धनिकगृहे कार्यं न कृतम् ? ते बहुमूल्यकम् एव वस्त्रम् धरन्ति । स्वादुपदार्थान् खादन्ति । मृदुले तल्पे स्वपन्ति । सर्वविधानि सुखानि अनुभवन्ति च'' इति ।

एतत्सर्वं श्रुतवतः पुष्करस्य मनसि भावना आगता यत् एतादृशम् एकम् अपि स्वप्नेऽपि अप्राप्नुवतः मम जीवनं व्यर्थम् एव इति । 'केनचित् वा मार्गेण मया तादृशं सुखम्



अनुभोक्तव्यम्' इति सङ्कल्पं कृतवान् सः । ग्रामात् बहिः कश्चन संन्यासी निवसति स्म । पुष्करः तं दृष्ट्वा स्वस्य व्यथां निवेदितवान् ।

सर्वं श्रुत्वा संन्यासी मन्दहासपूर्वकम् उक्तवान् - ''वत्स ! एकैकेन एकैकं कर्तव्यं निर्वोढव्यं भवति लोके । भवान् यत् सुखं भावयति तत् वस्तुतः सुखं न । यत् कष्टं भावयति तदपि वस्तुतः कष्टं न । एकं तु सत्यं यत् इह प्रपञ्चे विना परिश्रमं किमपि न प्राप्यते । सर्वं भगवतः इच्छायाः अनुगुणं प्रवर्तते'' इति ।

एतस्य वचनस्य अल्पः अपि परिणामः पुष्करे न जातः । सः दैन्येन संन्यासिनं प्रार्थितवान् यत् धनिकगृहे मम वासः जन्म वा यथा स्यात् तथा करोतु इति ।

तदा सः संन्यासी एकं मूलं दत्त्वा अवदत् - ''समीपस्थे ग्रामे विलासः नाम कश्चन धनिकः निवसति । वर्षद्वयात् पूर्वं तेन पत्नीवियोगः प्राप्तः अस्ति । तस्य उभौ पुत्रौ स्तः । तौ च विदेशे वाणिज्यं कुरुतः । पितृव्यपुत्री काचित् इदानीं तस्य गृहे निवसन्ती तदीयं योगक्षेमं निर्वहति । भवान् तं विलासं पश्यतु । एतत् मूलम् उभाभ्याम् अपि गृहीत्वा मनसि वक्तव्यं यत् आवां परस्परदेहविनिमयं कर्तुम् इच्छावः इति । तदा विलासस्य शरीरं भवता प्राप्यते, भवतश्च शरीरं तेन प्राप्यते । एषा क्रिया उच्यते - परकायप्रवेशः इति'' इति ।

''श्रीमन् ! भवता उच्यते - विलासः धनाढ्यः भाग्यवान् च इति । एवं स्थिते अपि किं सः मम शरीरस्य स्वीकारम् अङ्गीकुर्यात् ?'' इति पृष्टवान् पुष्करः ।

''निश्चयेन । भवादृशस्य कस्यचित् तरुणस्य अन्वेषणं सः कुर्वन् अस्ति आ बहोः कालतः । अतः सः भवतः शरीरम् अङ्गीकुर्यात् । भवान् तरुणः । सः मध्यवयस्कः । परकायप्रवेशः नाम स्वस्य वयसः अपि समर्पणम् । अतः एतस्य अङ्गीकारविषये पुनः चिन्तयतु'' इति बोधितवान् संन्यासी ।

''यौवनात् अपि सुखं प्रधानम् इति चिन्तयामि अहम् । काकः इव दीर्घकालजीवनात् अपि हंसः इव अल्पकालजीवनम् एव वरं खलु ?'' इति अवदत् पुष्करः ।

''रूपं दृष्ट्वा भवता भ्रान्तिः न प्राप्तव्या । काकेन तादृशं किं न प्राप्तं, यच्च हंसेन प्राप्तम् ? अतः सम्यक् विचिन्त्य निर्णयतु'' इति अवदत् संन्यासी ।

तथापि तस्य वचने विशेषादरम् अप्रकटयन्



विलासस्य भगिनी पाचकद्वारा विंशतिं लड्डुकानि कारितवती । तानि पुष्करशरीरे स्थितस्य विलासस्य पुरतः संस्थाप्य - ''भोः, यस्मिन् दिने भवान् कार्यम् आरब्धवान् तस्मिन् एव दिने भवता सौभाग्यं प्राप्तम् । यावन्ति इच्छति तावन्ति लड्डुकानि खादतु भवान् । एतत् खादनकार्यं भवता स्वामिनः पुरतः एव करणीयम् । भवतः स्वामी एषु दिनेषु अस्वस्थः अस्ति । तस्य कापि चिकित्सा फलकारिणी न जाता । यत् सः स्वयं न खादति तत् सेवकैः खाद्यमानं दृष्ट्वा सः नितरां सन्तोषम् अनुभवति'' इति अवदत् ।

पुष्करशरीरे स्थितः विलासः चत्वारि लड्डुकानि खादित्वा सन्तोषम् अनुभवन् अवदत् - ''एतादृशानि मया इतः पूर्वं न खादितानि एव आसन्'' इति ।

तदा विलासस्य शरीरे स्थितः पुष्करः - 'यत् शरीरं मया प्रविष्टम् अस्ति तत् रोगाणाम् आगरम् एव अस्ति चेदपि मया लड्डुकानि तु खादनीयानि एव' इति स्वगतं वदन् लड्डुकद्वयं खादितवान् एव ।

विलासस्य भगिनी तस्य खादनं निवारयन्ती अवदत् - ''अग्रज ! हन्त, किम् एतत् कृतं भवता ? गतं तु गतम् एव । इदानीं नदीपर्यन्तं वेगेन गत्वा प्रत्यागच्छतु । वैद्यः वदति यत् निरन्तरं व्यायामः कृतः चेत् यथेच्छं खादितुं शक्येत इति '' इति ।

ततः तौ नदीतीरपर्यन्तं गत्वा प्रत्यागतौ । ततः आरभ्य पुष्करेण विलासस्य शरीरे स्थितानां रोगाणां परिचयः एकैकशः प्राप्तः । इतः पूर्वं महान्तं परिश्रमं कृत्वा अपि सः

पुष्करः अनन्तरदिने एव विलासस्य गृहं गतवान् । तं दृष्ट्वा स्वस्य इच्छां प्रकटितवान् च ।

एतत् श्रुत्वा सन्तोषं प्रकटयन् विलासः अवदत् - ''अहं भवादृशम् एव प्रतीक्षमाणः आसम् । भवतः शरीरम् अहं स्वीकरिष्यामि, भवान् च मम शरीरं स्वीकरोतु । यावत् एतत् शरीरपरिवर्तनम् उभयोः सम्मतं भवति तावत् एतत् अनुवर्तताम्'' इति ।

एतदनन्तरं तौ संन्यासिना दत्तस्य मूलस्य साहाय्येन शरीरविनिमयं कृतवन्तौ । तस्मात् पुष्करः तस्य गृहस्य स्वामी जातः, विलासश्च सेवकः जातः ।

शरीरपरिवर्तनतः पुष्करः नितरां सन्तुष्टः । मधुरं खादनीयम् इति तस्य मनसि इच्छा उत्पन्ना । अतः सः विलासस्य भगिनीम् अवदत् - ''अद्य मधुरखाद्यं कारयतु'' इति ।

पूर्णोदरम् आहारं न प्राप्नोति स्म । इदानीं यत् इष्टं तत् खादनीयं चेत् तदर्थं स्थितः एक-मात्रोपायः नाम व्यायामः । अतः सः प्रतिदिनं व्यायामम् आरब्धवान् । त्रिचतुरेषु मासेषु गतेषु पुष्करेण आश्रिते शरीरे स्थिताः रोगाः क्रमशः दूरं गताः ।

पुष्करस्य शरीरम् आश्रितवता विलासेन अपि बह्व्यः समस्याः सम्मुखीकरणीयाः अभवन् । शरीरसामर्थ्यम् अस्ति चेदपि कर्मकरत्वेन कार्यं कर्तुं तस्य मनः न आसीत् । विना परिश्रमं सुखेन उपविश्य खादनम् इच्छति स्म सः । किन्तु विलासस्य शरीरम् आश्रितवान् पुष्करः विलासद्वारा बहूनि कार्याणि कारयति स्म । स्वस्य सेवाम् अपि कारयति स्म सः ।



एकस्मिन् दिने पुष्करस्य शरीरम् आश्रित-वान् विलासः आक्रोशमिश्रितेन स्वरेण अवदत् – ''मम कारणतः भवान् धनिकः जातः अस्ति । कृतज्ञतां वहता भवता मयि आदरः प्रदर्शनीयः आसीत् । गृहस्य कार्याणां निर्वहणाय अन्यं कमपि सेवकं नियोजयतु । अहं सुखी यथा तिष्ठेयं तथा करोतु'' इति ।

पुष्करः तस्य प्रार्थनां तिरस्कुर्वन् अवदत् – ''अहं यथा वदामि तथा व्यवहरणीयं भवता । अन्यथा आवां शरीरपरिवर्तनं करवाव । ततः स्वस्य इच्छायाः अनुगुणं जीवनं कर्तुं समर्थः भविष्यति भवान्'' इति ।

गृहकार्यादीनां करणे यद्यपि कष्टं भवति स्म, तथापि पुष्करस्य शरीरं त्यक्तुं विलासस्य इच्छा न आसीत् । यतः पुष्करस्य शरीरे तारुण्यम् आसीत् ।

एवमेव वर्षम् अतीतम् । संन्यासी तौ द्रष्टुम् आगतवान् । उभौ अपि संन्यासिनं भक्त्या प्रणम्य स्वकीयम् अनुभवं श्रावितवन्तौ । सर्वं श्रुत्वा संन्यासी पुष्करम् अवदत् – ''वर्षं यावत् भवता विलासस्य शरीरे तिष्ठता विविधानि सुखानि अनुभूतानि । अतः इदानीं भवता विलासस्य शरीरं परित्यज्य स्वकीयं शरीरम् आश्रयणीयम्'' इति ।

तदा पुष्करः अवदत् – ''अहम् एतदर्थं सन्नद्धः अस्मि । किन्तु मम नियमः यत् एतस्य अनन्तरं विलासः मां स्वगृहे कर्मकरत्वेन नियुक्तिं कुर्यात् इति'' इति ।

एतत् श्रुत्वा विलासः कोपेन – ''श्रीमन् ! एतं कर्मकरत्वेन नियोजयेयम् एव । किन्तु मम शरीरं प्राप्तवता एतेन महती कृतघ्नता आचरिता । गृहस्वामिनः दर्पं प्रदर्शयन् एषः

मद्द्वारा बहूनि कार्याणि कारितवान् । विविधाः सेवाः अपि कारिताः । विविधैः प्रकारैः एतेन अहं पीडितः । एतादृशं कृतघ्नं कथं वा मम सेवकं कुर्याम् ?'' इति अवदत् ।

तदा संन्यासी कठोरस्वरेण – ''कर्मकरत्वेन तस्य स्वीकारः सर्वथा न्यायोचितः अस्ति । भवन्तौ शरीरपरिवर्तनकारणतः विशेषलाभं प्राप्तवन्तौ स्तः एव । पुष्करः कृतघ्नः न'' इति विलासम् उक्त्वा मूलस्य साहाय्येन तयोः शरीरपरिवर्तनं कारयित्वा आशीर्वादेन अनुगृह्य ततः निर्गतवान् ।

वेतालः एवं कथां समाप्य अवदत् – ''राजन् ! संन्यासिनः कथनं किं न्यायोचितम् अस्ति ? किं तत्र नैतिकमूल्यम् अस्ति ? पुष्करः कृतघ्नः न इति तस्य कथनं किं युक्तिसङ्गतम् अस्ति ? विलासपुष्करयोः या वास्तविकी समस्या आसीत् तस्याः परिहारं विस्मृत्य संन्यासी कमपि मार्गम् उपदिष्टवान् । एवं ननु ? मम एतेषां सन्देहानां समाधानं जानन् अपि भवान् यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः अवदत् – ''संन्यासी न केवलं महत्याः शक्तेः आश्रयः, अपि तु मानवस्वभावस्य ज्ञाता अपि अस्ति सः । पुष्कारः कृतघ्नः न इति तेन यत् चिन्तितं तत् युक्तम् एव । मध्यवयस्कस्य विलासस्य शरीरं प्रविष्टवान् पुष्करः अवगतवान् यत् विलासस्य शरीरे के के रोगाः सन्ति, तेषां कारणं च किम् इति । विलासः विलासमयजीवनस्य दासः जातः आसीत् । अल्पम् अपि परिश्रमं न करोति स्म सः । व्यायामं कटाक्षेण अपि न पश्यति स्म । तस्य रोगस्य कारणम् एतत् एव आसीत् । पुष्करः एतत् अवगतवान् । यौवनपूर्णं शरीरम् अपि रोगग्रस्तं न स्यात् इति चिन्तयन् सः विलासद्वारा बहूनि कार्याणि कारितवान् । एतस्मात् सः स्वस्य शरीरस्य रक्षणं कर्तुं शक्तवान्, विलासेन श्रमजीवनस्य अभ्यासं कारितवान् च । एवं पुष्करेण विलासस्य हितम् एव चिन्तितम् । अतः पुष्करे कृतघ्नतारोपः सर्वथा अनुचितः'' इति ।

एवं त्रिविक्रमस्य मौनभङ्गं कर्तुं समर्थः वेतालः ततः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान् ।



# विधेः वैचित्र्यम्



जगनः सुकुमारः च सुहृदौ । एकदा तौ नगरं प्रति प्रस्थितौ । जगनेन कश्चित् अस्वस्थः बन्धुः द्रष्टव्यः आसीत् । सुकुमारेण कतिचन वस्तूनि क्रेतव्यानि आसन् । दीर्घयात्रा इति कारणतः तौ समीपतरेण अरण्यमार्गेण गमनाय मतिं कृतवन्तौ ।

पूर्वं सः अरण्यमार्गः कस्यचित् राज्यस्य दुर्गभागः आसीत् । किन्तु सः भागः कदाचित् युद्धे नष्टः आसीत् । तत्रत्यानि भवनानि जीर्णानि आसन् । अवशेषाणाम् उपरि परितः च लताः वृक्षाः च प्रवृद्धाः आसन् ।

एतेन मार्गेण तयोः मित्रयोः गमनसमये महती वृष्टिः आरब्धा । वृष्टितः रक्षणार्थं तौ किञ्चन जीर्णं भवनम् आश्रितवन्तौ । तदा आकस्मिकरूपेण तयोः पुरतः विद्यमानः कश्चन स्तम्भः भग्नः भूत्वा पतितः । भग्नात् स्तम्भात् स्वर्णनाणकैः पूर्णः कश्चन घटः प्राप्तः । तयोः महान् आनन्दः अभवत् ।

प्रथमम् एतत् दृष्टवान् जगनः - ''अहो, अदृष्टं नाम एतत् । आवाभ्याम् एषा सम्पत् विभज्य स्वीकरणीया । इतरेषां कल्याणम् अपि करणीयम्'' इति उक्तवान् ।

तदा सुकुमारः - ''आम् आम् । आवाभ्यां तथैव करणीयम् । किन्तु दिने गृहं प्रति एतावत्याः सम्पदः नयनमपि उचितं न । प्राचीनः एषः घटः अपि उन्नयनसमये भग्नः भवितुम् अर्हति । वयं रात्रौ आगच्छामः चेत् वरम् । एकं दृढं स्यूतम् आनयेव चेत् गृहं प्रति सुवर्णस्य नयनं सुकरं स्यात् । अतः नगरे आवयोः कार्यं समाप्य प्रतिगमनसमये

अत्र आगच्छाव'' इति उक्तवान् ।

एषः उपायः जगनाय अपि अरोचत । तौ तं घटं कस्यचित् वृक्षस्य कोटरे गोपितवन्तौ । वृष्टेः स्थगनानन्तरं तौ पुनश्च प्रयाणम् आरब्धवन्तौ । परेद्यवि मध्याह्ने तौ नगरं प्राप्तवन्तौ । 'कार्यस्य समाप्तेः अनन्तरं सूर्यास्तसमये अमुके स्थाने मेलनीयम्' इति ताभ्यां निर्णीतम् ।

जगनः बन्धोः दर्शनार्थं गतवान् । किन्तु सुकुमारः अरण्यं प्रत्यागत्य एकस्यां गोण्यां सर्वं सुवर्णं पूरयित्वा तां गोणीं कस्मिंश्चित् गर्ते स्थापयित्वा शिलाभिः आच्छादितवान् । मूलघटे मृत्तिकां पूरयित्वा अपरेण मार्गेण वृष्ट्यां नगरं प्राप्तवान् । पूर्वनिश्चिते स्थाने सः जगनेन मिलितवान् ।

सुकुमारं दृष्ट्वा जगनः - ''कथं भवान् जलेन आर्द्रः ?'' इति पृष्टवान् ।

उद्विग्नः सुकुमारः किम् उत्तरं वक्तव्यम् इति न ज्ञातवान् । स्खलद्वचोभिः सः - ''न । नाहम् आर्द्रः । एषा आर्द्रता तु स्वेदकारणतः'' इति उक्तवान् ।

मुग्धः जगनः - ''भवतः क्रयणं समाप्तं किम् ?'' इति पुनः पृष्टवान् ।

पुनश्च उत्तरं दातुम् अशक्तः सुकुमारः - ''मया वस्तूनि बन्धूनां गृहे स्थापितानि'' इति उक्तवान् । तेन स्वर्णं नेतुं स्यूतः अपि न आनीतः आसीत् । गमनमार्गे सुकुमारः बहु उद्विग्नः दृश्यते स्म । सः मित्रम् उद्दिश्य - ''जगन, भवान् प्रथमं घटं दृष्टवान् । भवता एव सुवर्णस्य अधिकः भागः प्राप्तव्यः'' इति उक्तवान् ।

तदा जगनः - ''एतत् भवतः औदार्यं द्योतयति । किन्तु आवाभ्यां सम्पदः समभागः एव करणीयः । तथापि आवाभ्यां मिलित्वा ग्रामार्थं कश्चन भागः व्ययीकरणीयः । भवान् जानाति एव । एकः राजा अस्माकं ग्रामस्य पार्श्वे शतात् वर्षेभ्यः पूर्वं कासारं निर्मितवान् आसीत् । इदानीं सः कासारः मृत्तिकया पूर्णः



सन् लघुः जातः अस्ति । ततः समग्रः पङ्कः निस्सारणीयः'' इति उक्तवान् ।

''उत्तमः विचारः एषः'' इति सुकुमारः उक्तवान् । ताभ्यां यदा दुर्गस्य स्थानं प्राप्तं तदा मध्यरात्रः अतीतः आसीत् । किन्तु तत्र जगनेन किं दृष्टम् ? घटः आकण्ठं मृत्तिकया पूर्णः आसीत् ।

तत् दृष्ट्वा सुकुमारः – ''दुर्दैवं नाम एतदेव । पूर्वस्मिन् जन्मनि आवाभ्यां कोऽपि वञ्चितः स्यात् । अतः दैवेन एवंविधया आवां वञ्चितौ । दैवेन अस्मभ्यं सुवर्णं दर्शितम् । यदा आवां तत् प्राप्तुम् इष्टवन्तौ तदा तत् सुवर्णं मृत्तिका-रूपेण परिवर्तितं जातम्'' इति उक्त्वा हस्तेन ललाटं घट्टयन् रोदनम् आरब्धवान् ।

'मित्रेण किं कृतं स्यात् ?' इति अवगमन-सामर्थ्यं जगनस्य आसीत् एव । किन्तु सः शान्तरूपेण सुकुमारस्य सान्त्वनं कृतवान् – ''भवतु नाम, तत् सुवर्णम् आवाभ्यां सम्पादितं तु न आसीत् । प्रवृत्तं सर्वं स्वप्नं भावयतु । अस्माकं तु किमपि न नष्टम् । तत् सुवर्णम् अस्माकं न आसीत् एव'' इति ।

सुकुमारः अनुक्षणं रोदनं स्थगितवान् ।

परेद्यवि सायं सुकुमारः एकाकी अरण्यं गत्वा तां सम्पदां गृहं प्रति आनीतवान् । दिने दिने सम्पदः वर्धनं जातम् इव दर्शितवान् । वाणिज्ये साफल्यं प्राप्तम् इति सः सर्वान् वदति स्म । वास्तविकं कारणं जगनः एकः एव जानाति स्म । अतः सः सन्मार्गेण एव स्वभागं प्राप्तुम् अवसरं प्रतीक्षमाणः आसीत् । सः मृत्तिकया सुकुमारस्य एकां प्रतिमां निर्मितवान् । प्रतिमा उपवेशनभङ्ग्याम्



आसीत् । प्राणिनां पालने बहु रुचिः आसीत् जगनस्य । तस्य गृहे इतरैः लघु-प्राणिभिः सह सद्यः एव प्राप्तौ द्वौ वानर-शिशू अपि आस्ताम् । जगनः प्रतिमायाः अङ्के, भुजयोः, शिरसि च कलायान् स्थापयति स्म । वानरौ कलायान् अन्विष्य खादतः स्म । एवमेव प्रतिदिनं प्रचलति स्म ।

सुकुमारः सपत्नीकः दीर्घकालं यावत् तीर्थयात्रां प्रति गन्तुम् इष्टवान् । तौ जगनमपि आहूतवन्तौ । किन्तु जगनः तीर्थयात्रां प्रति गमनस्य स्थितौ न आसीत् । अनन्तरं सुकुमारः 'मम आगमनपर्यन्तं मम पुत्रयोः पालनं करोतु' इति निवेदितवान् । सुकुमारस्य एकः पुत्रः षड्वर्षीयः, अपरः अष्टवर्षीयः । जगनः तयोः बालयोः पालनं सहर्षम् अङ्गीकृतवान् । सुकुमारः पुत्रौ जगनस्य गृहे त्यक्त्वा गतवान् ।

जगनः बालौ प्रीत्या एव पश्यति स्म । बालाभ्याम् आम्रफलानि नितरां रोचन्ते इति जगनः ज्ञातवान् । अतः सः तौ आहूय - ''वत्सौ, मम मातुलस्य विशाला आम्रवाटिका अस्ति । तत्र बहुविधानि आम्राणि सन्ति । भवन्तौ पक्षं यावत् तत्र गत्वा आगच्छताम् । यथेच्छं मधुराणि आम्राणि खादित्वा आनन्दम् अनुभवताम्'' इति सूचितवान् । बालौ सन्तोषेण एतं प्रस्तावम् अङ्गीकृतवन्तौ । एवं बालौ सुदूरस्थं सुरक्षितस्थानं प्रेषितौ जगनेन ।

सप्ताहानन्तरं सुकुमारः सपत्नीकः प्रत्यागतवान् । सुकुमारः जगनेन मिलित्वा पुत्रयोः पालनार्थं धन्यवादान् समर्पितवान् । पुत्रौ गृहं प्रति नेतुम् इष्टवान् । जगनः खिन्नः इव दृश्यते स्म । सः सुकुमारम् आसन्दे उपवेश्य - ''भोः मित्र ! दुर्दैवं कथं भवति इति इतरेषाम् अपेक्षया आवाम् अधिकं जानीवः खलु ! एकदा शुद्धं सुवर्णं मृत्तिका-रूपेण परिणतम् आसीत् इति भवान् जानाति एव । पुनश्च तादृशेन दैवेन एव द्वौ बालकौ वानररूपेण परिवर्तितौ स्तः । किन्तु तौ वानरौ बहु उत्तमौ'' इति उक्तवान् ।

सुकुमारः साश्चर्यम् उच्चस्वरेण - ''किं मम पुत्रौ वानरौ जातौ ?'' इति पृष्टवान् ।

तदा जगनः - ''आम् । किन्तु तौ सुन्दरौ स्तः । तयोः दर्शनेन महान् आनन्दः भवति'' इति उक्त्वा तत्र तौ वानरौ आनीतवान् । प्रतिमायाः सादृश्यस्य कारणतः तौ वानरौ अभ्यासबलात् कलायान् अन्वेष्टुं सुकुमारस्य उपरि कूर्दनं कृतवन्तौ । तौ तस्य अङ्के, शिरसि, भुजयोः च कलायान्वेषणम् आरब्धवन्तौ ।

तदा जगनः– ''पश्यतु । पितुः विषये कियती प्रीतिः एतयोः'' इति उक्तवान् । सुकुमारः क्षणं यावत् स्तब्धः । मित्रं जगनः चतुरः, न तु मूर्खः इति सः अवगतवान् ।

सः किमपि अकथयित्वा गृहं गत्वा गोणी-मितं सुवर्णम् आनीय अर्धभागं जगनाय दत्तवान् । तेन किञ्चित् एव सुवर्णं व्ययितम् आसीत् । जगनः अनन्तरं सुकुमारं स्वस्य मातुलस्य गृहं प्रति नीतवान् । बालौ आम्र-वाटिकायाम् उत्साहेन क्रीडन्तौ आस्ताम् । तौ यथापूर्वं पित्रा सह व्यवहरन्तौ समीपम् आगतवन्तौ, वानरौ इव न । सुकुमारः तौ सन्तोषेण गृहं नीतवान् ।






# करवस्त्रं न मार्जनाय

अत्र एकस्य करवस्त्रस्य प्रस्तावः क्रियते, यच्च न सामान्यम् । एतत् हस्तेन यदा गृह्यते तदा नासिकामार्जनाय एतस्य उपयोगे मनः न प्रवर्तेत । एतेन हस्तमालिन्य-निवारणाय अपि मतिः न भवेत् । एतस्य नाम अस्ति 'चम्बारुमाल्' इति । हिमाचलप्रदेशे स्थितस्य 'चम्बा'नामकस्य प्रदेशस्य कारणतः एतेन एतादृशं नाम प्राप्तम् अस्ति ।

चम्बाप्रदेशे निवसन्त्यः धनिककुलीयाः उच्चमध्यस्तरकुलीयाः च महिलाः एतादृशस्य निर्माणे अतिकुशलिन्यः ।



चतुरस्राकारकं हस्तव्यूतिनिर्मितं च एतत् करवस्त्रं (रुमाल्) १८-१९ शतकयोः मध्यकाले जनप्रियं जातम् । एतस्मिन् कालावधौ बहवः कलाकाराः मोगलास्थानं परित्यज्य चम्बा-कांग्र-बशोलीप्रभृतिषु स्थलेषु वासं कृतवन्तः । एते सर्वे प्रदेशाः हिमाचलप्रदेशीयाः । धनिककुलीयाः महिलाः एतेषां कलाकाराणां द्वारा चित्रस्य बाह्यरेखाः लेखयन्ति स्म । ततः ताः उत्कृष्टया व्यूतिकलया कौशेयसूत्रैः चित्राणि रचयन्ति स्म ।

एतेषु करवस्त्रेषु महाभारतयुद्धस्य, कृष्णस्य रासलीलायाः, सिद्धिबुद्धिसमेतस्य गणेशस्य वा विविधाः सन्निवेशाः चित्र्यन्ते प्राधान्येन । इदानीं यानि चम्बाकरवस्त्राणि प्राप्यन्ते तेषु अतिप्राचीनम् अस्ति - गुरुनानकस्य भगिन्या बेडेनाङ्किवर्यया चित्रितम् । तच्च १६ शतके निर्मितं स्यात् । एतत् पञ्जाबराज्यस्य होशियारपुरे स्थिते वस्तुसङ्ग्रहालये सम्यक् संरक्षितम् अस्ति अद्यापि ।



# वाणिज्यचिन्तनम्

सूरदासः परिश्रमपूर्वकं जीवनं यापयति स्म । आदिनं परिश्रमः कृतः चेदपि तेन अल्पम् एव धनं सम्पाद्यते स्म । यत् सम्पाद्यते तत् उदरपूरणाय अपि कदाचित् अपर्याप्तं भवति स्म । अधिकाधिकं धनं सम्पाद्य सुखेन जीवनं यापनीयम् इति तस्य इच्छा आसीत् ।

तस्मिन् ग्रामे रङ्गनाथः नाम कश्चन धनिकः निवसति स्म । कदाचित् तस्य पत्नी सावित्री अस्वस्था जाता । तत्समये तदीयः पुत्रः स्नुषा च काशीं गतवन्तौ आस्ताम् । मासानन्तरम् एव तयोः प्रत्यागमनस्य निरीक्षा आसीत् ।

रङ्गनाथः वैद्यम् आनायितवान् । वैद्यः सर्वं परीक्ष्य – ''चिन्तायाः न काऽपि आवश्यकता । मया दीयमानस्य औषधस्य सेवनेन द्वित्रेषु एव दिनेषु ज्वरः अपगमिष्यति । किन्तु एतया मासद्वयं यावत् पूर्णा विश्रान्तिः स्वीकरणीया भवति'' इति उक्त्वा यथा-योग्यम् औषधं दत्त्वा ततः प्रतिगतवान् ।

रङ्गनाथः सूरदासम् आहूय गृहस्य स्थितिम् उक्त्वा – ''भवता मम गृहे एव स्थातव्यम् । भवतः भोजनादिव्यवस्था अत्रैव भवतु । किन्तु अन्यानि गृहकार्याणि यथा तथैव पाकः अपि भवता एव करणीयः'' इति अवदत् ।

तदा सूरदासः अवदत् – ''भवतः गृहे स्थितिः सर्वकार्यकरणं च मम सम्मतम् एव । पाकम् अपि अहं कुर्याम् । किन्तु किं करवाणि, पाकं न जानामि अहम्'' इति ।

''तत्र का चिन्ता ? मम पत्नी शयाना एव सर्वं बोधयिष्यति'' इति अवदत् रङ्गनाथः । सूरदासः तस्मिन् एव दिने रङ्गनाथस्य गृहस्य कार्ये उद्युक्तः जातः ।

सूरदासः बुद्धिमान् । यत् उच्यते तत् झटिति गृह्णाति स्म सः । अतः पाककार्यम् अपि द्वित्रेषु एव दिनेषु अवगतं तेन । सप्ताहाभ्यन्तरे सः पाके समर्थः जातः । तस्य प्रशंसां कुर्वती सावित्री अवदत् – ''एतावच्छीघ्रं बालिकाः

भामहः

अपि पाकस्य अभ्यासं कर्तुं न अर्हन्ति'' इति ।

रङ्गनाथः अपि सूरदासस्य पाकस्य प्रशंसाम् अकरोत् । सूरदासः यत् शाकान्नं सज्जीकरोति स्म तत् तु नितरां स्वादु भवति स्म । तत् खादित्वा रङ्गनाथः सावित्री च वदतः स्म - 'एतादृशम् अस्माभिः इतः पूर्वं न खादितम्' इति । तदा सूरदासः विनयेन वदति स्म - ''सर्वं मया अत्रैव ज्ञातम्'' इति ।

मासानन्तरं रङ्गनाथस्य पुत्रः स्नुषा च काशीतः प्रत्यागतौ । इदानीं सूरदासस्य आवश्यकता न आसीत् तत्र । एतत् जानन् सूरदासः रङ्गनाथम् अवदत् - ''एतस्मिन् गृहे अहं सुखेन आसम् । मह्यं यत् वेतनं दीयते तत् भवतः दृष्ट्या न महत् । अतः अत्रैव स्थातुम् अनुमतिः दीयताम् । अहं विश्वासपात्रतां रक्षन् कार्यं करिष्यामि'' इति ।

तदा रङ्गनाथः हसन् अवदत् - ''मम पुत्रः कृष्यादिकार्यं पश्यति । स्नुषा च पाकादिकार्यं निर्वहति । अन्येषु गृहकार्येषु अहं साहाय्यं करोमि । यद्दिने अन्यस्य साहाय्यम् आवश्यकं तस्मिन् दिने भृतिं दत्त्वा कस्यचित् साहाय्यं स्वीक्रियते । तावता सर्वं सुष्ठु निरूढं भवति । एवं स्थिते भवते प्रातिमासिकं वेतनं किमर्थं दातव्यं मया ? भवान् तु बुद्धिमान्, परिश्रम-शीलः च । अतः एतस्य एव गृहस्य अव-लम्बनं सर्वथा न वरम् । स्वावलम्बिजीवनं चिन्त्यताम्'' इति ।

एतत् श्रुत्वा सूरदासः दैन्येन अवदत् - ''स्वावलम्बिजीवनं कर्तुं मम सामर्थ्यं क्व ? तादृशं जीवनं कर्तुं किं कमपि मार्गं दर्शयितुं शक्नुयात् भवान् ?'' इति ।



''भवान् यादृशं शाकान्नं निर्माति तादृशम् अन्यः कोऽपि निर्मातुं न शक्नोति । अतः भवान् विपण्यां शाकान्नस्य यदि विक्रयणं कुर्यात् तर्हि अल्पे एव काले प्रभूतं लाभं सम्पादयेत् । एतदर्थं यत् मूलधनम् आवश्यकं तत् अहं दास्यामि'' इति वदन् रङ्गनाथः सूरदासे धैर्यं पूरितवान् ।

रङ्गनाथस्य अनुरोधस्य कारणतः सूरदासः वाणिज्ये मतिं कृतवान् । ततः सप्ताहाभ्यन्तरे तेन शाकान्नविक्रयणम् आरब्धम् । शाकान्नस्य विक्रयणम् उत्तमतया भवति स्म । अतः योग्यः लाभः अपि प्राप्यते स्म सूरदासेन । मासानन्तरं सः कृतज्ञताप्रकटनाय रङ्गनाथस्य गृहं गतवान् ।

रङ्गनाथः तं पृष्टवान् - ''वाणिज्यं कथं प्रचलति ?'' इति ।

तदा सूरदासः अवदत् - ''वाणिज्यं तु



उत्तमम् अस्ति । कदाचित् भाण्डपरिमितस्य शाकान्नस्य विक्रयणं भवति, पुनः कदाचित् तदर्धस्य । यत् अविक्रीतं भवति तत् तु शीतलं भवति । शीतलं कोऽपि न खादति । तथापि वाणिज्ये हानिः तु नास्ति'' इति ।

तदा रङ्गनाथः अवदत् - ''ग्राहका याहशम् इच्छन्ति ताहशं दत्तं चेदेव भवतः वाणिज्यं वर्धति । जनाः उष्णं शाकान्नम् इच्छन्ति खलु ? अतः आपणे द्वित्राः चुल्लीः स्थापयतु । ताः सदा ज्वलन्त्यः भवन्तु । द्वित्रान् सहायकान् अपि स्थायपतु । तेन सदा उष्णं शाकान्नम् एव भवान् दातुं शक्नुयात् । इदानीं स्थालिकामितं शाकान्नं रूप्यकद्वयेन खलु विक्रीणीते भवान् ? एकरूप्यकमूल्येन अर्धस्थालिकामितस्य शाकान्नस्य विक्रयणं करोतु । एतस्मात् भवतः वाणिज्यं वर्धिष्यते । द्वित्राः उद्योगं प्राप्स्यन्ति अपि'' इति ।

एतत् सश्रद्धं श्रुत्वा सूरदासः अवदत् - ''आर्य ! युक्तम् अस्ति भवतः कथनम् । भवतः मार्गदर्शनात् एव मया लाभार्जकं स्वावलम्बिजीवनम् आरब्धम् । अग्रे अपि यदा यदा समस्या उपस्थिता भविष्यति तदा अहं भवत्समीपम् आगमिष्यामि । भवता मार्गदर्शनं करणीयम्'' इति ।

''एवं पौनःपुन्येन अन्येषां मार्गदर्शनस्य स्वीकारः उत्तमस्य वणिजः लक्षणं न । भवान् पुनरपि मार्गदर्शनाय मत्समीपं यदि आगमिष्यति तर्हि 'वाणिज्यं परित्यजतु' इति अहं भवन्तं वदिष्यामि'' इति अवदत् रङ्गनाथः ।

इदानीं सूरदासस्य आधीन्ये त्रयः सहायकाः सन्ति । ग्राहकाणाम् इच्छायाः अनुगुणं शाकान्नं दातुं समर्थः जातः अस्ति सः । सदा उष्णम् एव शाकान्नं दीयते तत्र ।

अर्धस्थालिकापरिमितस्य शाकान्नस्य

विक्रयणं यदा आरब्धं तदा अन्या समस्या आरब्धा। ये स्थालिकामितं शाकान्नं खादन्ति स्म ते इदानीम् अर्धस्थालिकामितम् एव स्वीकर्तुम् उद्युक्ताः जाताः । यदि तत् स्वादु अस्ति इति भासते तर्हि अपरम् अर्ध-स्थालिकामितं शाखान्नं स्वीकुर्वन्ति स्म। स्थालिकामितस्य शाकान्नस्य सज्जीकरणे यावान् समयः आवश्यकः तावान् एव समयः आवश्यकः भवति स्म सूरदासस्य अर्ध-स्थालिकामितस्य सज्जीकरणे अपि । समग्रे दिने दशानां स्थालिकामितशाकान्नानां विक्रयणं यत्र भवति स्म तत्र इदानीं दशानाम् अर्धस्थालिकामितशाकान्नानां विक्रयणं भवति स्म । एतस्याः समस्यायाः निवारणं कथम् इति चिन्तनम् आरब्धवान् सूरदासः ।

सूरदासस्य वाणिज्यं कथं प्रवर्तते इति कदाचित् ज्ञातुम् इष्टवान् रङ्गनाथः । 'सूरदासः तु स्वयं मम गृहं न आगतः एषु मासेषु । अतः अहम् एव तत्र गत्वा तस्य वाणिज्यं कथम् अस्ति द्रक्ष्यामि । शाकान्नम् अपि सकृत् खादिष्यामि' इति अचिन्तयत् सः ।

एकदा सायं रङ्गनाथः सूरदासस्य आपणं गतः । आपणे ग्राहकाः अधिकतया दृश्यन्ते स्म । उभौ पाककार्ये रतौ दृश्येते स्म, एकश्च वितरणकार्ये । सूरदासः सर्वत्र साहाय्यं कुर्वन् धनस्वीकरणकार्यम् अपि निर्वहति स्म ।

रङ्गनाथः अचिन्तयत् यत् अर्धस्थालिका-मितं शाकान्नम् एव मह्यं पर्याप्तम् इति । अतः सः वितारकम् उक्तवान् यत् अर्धस्थालिकामितं शाकान्नं ददातु इति । कार्यव्यग्रः सूरदासः रङ्गनाथस्य आगमनं न ज्ञातवान् आसीत् ।

वितारकः शाकान्नम् आनीय रङ्गनाथस्य पुरतः स्थापितवान् । स्थालिकायां शाकान्नं पूर्णपरिमाणेन एव दृश्यते स्म । तत् स्वादु तु आसीत् एव । अतः रङ्गनाथः सन्तोषेण तत् खादितवान् । खादनानन्तरं यदा सः एकं रूप्यकं



दातुम् उद्युक्तः तदा वितारकः तम् अवदत् - ''रूप्यकद्वयं दातव्यम्'' इति ।

''कथमेतत् ? मया अर्धस्थालिकामितम् एव खादितम्'' इति रङ्गनाथः उच्चस्वरेण अवदत् । स च स्वरः सुरदासेन श्रुतः, रङ्गनाथः तेन अभिज्ञातः च । सः दूरात् एव तं प्रणम्य वितारकम् आदिष्टवान् - ''एतस्मात् धनं मा स्वीकरोतु'' इति ।

यदा सम्मर्दः न्यूनः जातः तदा रङ्गनाथः सुरदासम् अवदत् - ''वाणिज्यं तु उत्तमम् अस्ति । किन्तु अत्याशा न करणीया । अर्धस्थालिकापरिमितं शाकान्नं दत्त्वा पूर्णस्थालिकमितस्य शुल्कं यत् स्वीक्रियते तत् तु अनुचितम्'' इति ।

तदा सुरदासः अवदत् - ''मम व्यवहारे अनौचित्यं किमपि नास्ति । यदा अहम् अर्धस्थालिकामितं शाकान्नं दातुम् आरब्धवान् तदा जनाः तदेव अधिकतया स्वीकृतवन्तः । एतस्मात् मम कार्यम् अधिकं जातम् । आयः तु न प्रवृद्धः । यदि अर्धस्थालिकामितस्य दानं स्थगमेयं तर्हि जनाः असन्तुष्टाः भवेयुः । अतः मया उपायः कृतः । स्थालिकामितस्य दानं मया पुर्णतः स्थगितम्, अर्धस्थालिकामितस्यैव दानम् आरब्धम् । तन्नाम स्थालिकामितस्यैव नाम कृतम् - अर्धस्थालिकामितम् इति'' इति ।

''तदर्थं रूप्यकद्वयं स्वीक्रियते खलु भवता ?'' इति अपृच्छत् रङ्गनाथः ।

''यत् दीयते तस्य वास्तविकं मूल्यं स्वीक्रियते मया । अर्धस्थालिकामितम् इति नाम अस्ति चेदपि स्थालिकामितम् एव खलु दीयते ? अतः रूप्यकद्वयं स्वीक्रियते । मया काऽपि वञ्चना न क्रियते । नाममात्रस्यैव परिवर्तनं कृतम् । जनाः तत् नाम एव इच्छन्ति, मूल्यं न चिन्तयन्ति'' इति विवृतवान् सुरदासः ।

''वाणिज्यचिन्तनं नाम एतदेव । वञ्चना न करणीया । जनप्रियतासम्पादनार्थं किमपि तन्त्रम् आश्रयणीयम् । तदा एव वाणिज्यं वर्धते । एतत् रहस्यम् अवगतम् अस्ति भवता । अतः इतः परं भवतः वाणिज्यं लाभदायकं भविष्यत्येव इत्यत्र न संशयः । भवतः, भवद्वाणिज्यस्य च दर्शनात् मया महान् आनन्दः प्राप्तः'' इति उक्त्वा सूरदासम् आशिषा अनुगृह्य ततः निर्गतवान् रङ्गनाथः ।



# वार्ताविशेषः

## रूप्यककागदमाला



चेन्नैनगरे स्थितस्य देवस्य कण्ठे नववर्षारम्भदिने एका विलक्षणा माला राराजते स्म । सा च ५०, १००, ५००, १००० इत्यादिभिः मूल्यैः युक्तैः रूप्यककागदैः निर्मिता । मालास्थरूप्यकाणां मूल्यम् आसीत् सार्धषड्लक्षमितम् (रू. ६,५०,०००-००) । एषा घटना प्रवृत्ता गणेशमन्दिरे । तस्य गणेशस्य भक्ताः एतानि प्रत्यग्राणि रूप्यककागदानि समर्पितवन्तः आसन् देवाय । चेन्नैसमीपस्थे अपरस्मिन् प्रदेशे भगवती भद्रकाली (दुर्गा) अपि एवमेव ५, १०, ५०, १००, ५०० इत्यादिभिः मूल्यैः युक्तैः रूप्यककागदैः अलङ्कृता आसीत् । तेषां आहत्य मूल्यम् आसीत् द्विलक्षमितम् (Rs. 2,00,000) ।

## शरीरं विद्धं सूचीभिः



ब्रेण्ट् मोफाट्नामकः ३४ वर्षीयः केनडादेशीयः तरुणः नवं विक्रमं साधयितुम् इष्टवान् । एतदर्थं तेन विलक्षणः क्रमः आश्रितः । सः ७०२ सूचीः स्वशरीरे योजितवान् । ताः समग्रे शरीरे आसन्, प्राधान्येन तु पादे पादतले च । अष्टघण्टाभ्यन्तरे एतत् सूचीयोजनं सम्पन्नम् । तस्य लक्ष्यम् आसीत् यत् सहस्रं सूच्यः शरीरे योजनीयाः इति । किन्तु ७०२ सूचीनां योजनं यावत् सम्पन्नं तावता एव सः वेदनां सोढुम् अशक्तः जातः । पञ्च निमेषान् यावत् ताः सर्वाः तस्य शरीरे आसन् । ततः तासाम् अपनयनम् आरब्धम् । 'सूचीनाम् अपनयनम् एव अधिकवेदनाजनकम् आसीत्' इति वदति मोफेट् । योजनापनयनादिकं यदा प्रवर्तते स्म तदा श्रवणयन्त्रद्वारा सुमधुरसङ्गीतम् अपि निरन्तरं शृण्वन् आसीत् एषः मनिटोबानिवासी मोफेट् । प्रायः सङ्गीतं तस्य वेदनायाः न्यूनीकरणे समर्थं जातं स्यात् । एवं ननु ?

# हरियाणाराज्यस्य जानपदकथा

बहुभ्यः वर्षेभ्यः हर्याणाराज्यं भारतीय-संस्कृत्याः नागरिकतायाः च प्रेङ्खावत् अस्ति । भारतस्य पौराणिकसाम्राज्यानां केन्द्रगृहम् आसीत् हर्याणाराज्यम् । अत्रैव ब्रह्मदेवः तपः आचर्य जगतः सृष्टिं कृतवान् इति श्रूयते । महर्षिणा वेदव्यासेन महा-काव्यस्य महाभारतस्य लेखनम् अत्रैव कृतम् । न केवलं तावत्, अत्रत्ये कुरुक्षेत्रे एव भगवान् श्रीकृष्णः अर्जुनेन सह संलपन् भगवद्गीताम् उपदिष्टवान् ।

१९६६ तमे वर्षे नवम्बर्मासस्य प्रथमे दिनाङ्के हर्याणाराज्यस्य संरचना अभवत् । ४४,००० वर्गकिलोमीटर्विस्तीर्णयुतस्य एतस्य राज्यस्य जनसंख्या २१,०८२, ९८९ मिता ।

हर्याणाराज्यस्य पूर्वभागे देहली उत्तर-प्रदेशः च, पश्चिमभागे पञ्जाब्राज्यम्, उत्तरभागे हिमाचलप्रदेशः, दक्षिणभागे राजस्थानं च अस्ति ।

शिवालिक-अरावलीपर्वतावल्यौ एतस्य राज्यस्य प्रमुखभौगोलिकस्थाने । यमुना घाघ्रा च अत्रत्ये प्रमुखनद्यौ । वेदकालीना सरस्वतीनदी एतेन मार्गेण एव प्रवहति स्म इति श्रूयते ।

चन्दीगढ अस्य राज्यस्य राजधानी । प्रमुखा भाषा हिन्दी । पञ्जाबी, उर्दु, स्थानीया हर्याण्वी चापि अत्र भाष्यन्ते प्राधान्येन ।

## दुर्विधेः मूलोत्पाटनम्

हरियाणाराज्यस्य फलवत्तरे भूभागे कृषकाणां कश्चित् समृद्धः कुटुम्बः निवसति स्म । चतुरस्य वृद्धकृषकस्य सप्त पुत्राः आसन् । षण्णां विवाहः जातः आसीत् । सप्तमः इतोऽपि बालः आसीत् । सर्वे परिश्रमेण कार्यं कुर्वन्ति स्म । परिश्रमस्य फलं विभज्य स्वीकुर्वन्तः ते सुखेन जीवन्ति स्म । तेषां केदाराः ग्रामं परितः बहुषु स्थानेषु आसन् । ते केदाराः सर्वदा स्वर्णवर्णेन गोधूमेन विराजन्ते स्म ।

तेषां जीवनं सुखेनैव प्रचलति स्म । किन्तु अनूह्या काचित् विपत् तस्य कुटुम्बस्य शान्तिम्



अनाशयत् ।

एकदा प्रातः वृद्धः कृषकः यदा उत्थितवान् तदा सः किमपि द्रष्टुं न शक्तः । तस्य द्वयोः अपि नेत्रयोः दृष्टिशक्तिः अपगता आसीत् । आकस्मिकरूपेण एवं जातम् इति कारणतः कृषकः तत्कुटुम्बीयाः च दिग्भ्रान्ताः अभवन् । ते सर्वविधवैद्यान् आनीतवन्तः । किन्तु सर्वेऽपि वैद्याः कृषकस्य दृष्टिशक्तेः आनयने असमर्थाः अभवन् ।

कदाचित् कश्चित् संन्यासी तं ग्रामम् आगतवान् । कृषकस्य पुत्रः विपण्यां संन्यासिनं दृष्ट्वा गृहं प्रति निमन्त्रितवान् । संन्यासी कृषकं दृष्ट्वा - ''अहो ! अत्र काचित् दुष्टशक्तिः कार्यरता अस्ति । दृष्टेः पुनःप्राप्त्यर्थं वङ्गभूमेः अपरभागे स्थिते महासागरे उपलभ्यमानस्य महास्वर्ण-मत्स्यस्य नेत्रेण स्पर्शः कारणीयः'' इति उक्तवान् ।

यदा कृषकः साहाय्यप्राप्त्याशया ज्येष्ठपुत्रं दृष्टवान् तदा सः पुत्रः - ''अहं तु गृहस्थः । मम पत्नी अस्ति, पुत्रद्वयम् अपि अस्ति । तादृशदुष्करप्रवासम् अहं कथं वा कुर्याम् ? मध्येमार्गं किं भवेत् इति कः जानाति ?'' इति उक्तवान् । तदा कृषकः साहाय्यार्थम् इतरपुत्रान् निवेदितवान् । ज्येष्ठपुत्रेण यत् कारणम् उक्तम् आसीत् तादृशमेव कारणं द्वितीयेन, तृतीयेन, चतुर्थेन, पञ्चमेन, षष्ठेन च उक्तम् । महतीं निराशतां प्राप्तवान् वृद्धः कनिष्ठं पुत्रं दृष्टवान् । कनिष्ठः पुत्रः अविवाहितः आसीत् । न केवलं तावत्, सः पितरि विशेषप्रीतिमान् आसीत् । अतः अनुक्षणं सः स्वर्णमत्स्यस्य अन्वेषणार्थं निर्गतवान् । सः दृढचित्तः भूत्वा आत्म-



विश्वासपूर्वकम् अरण्यानि अन्यान्यराज्यानि च क्रान्त्वा वङ्गराज्यस्य अपरभागे विद्यमानं महासागरं प्राप्तवान् । एकां नौकाम् आरुह्य स्वर्णमत्स्यस्य अन्वेषणार्थं सः प्रस्थितवान् । जालं प्रसार्य बहूनि दिनानि यावत् प्रतीक्षां कृतवान् सः । अन्ते एकदा तस्य भाग्योदयः जातः ।

स्वर्णमत्स्यः तस्य जाले पतितः । सप्तमः पुत्रः यदा तं मत्स्यं ग्रहीतुम् उद्युक्तः तदा सः मत्स्यः अश्रुपूर्णनयनः - ''मां मा गृह्णातु । मया किम् अपराद्धम् ?'' इति पृष्टवान् ।

तदा सः बालकः - ''कश्चित् संन्यासी उक्तवान् अस्ति यत् भवतः नेत्रेण मम पितुः नेत्रस्य स्पर्शः कार्यते चेत् मम पिता स्वदृष्टिं पुनः प्राप्स्यति इति । अतः मया भवान् गृह्यते । अन्या गतिः नास्ति मम'' इति उक्तवान् ।

तदा सः स्वर्णमत्स्यः - ''एतदेव खलु मम

ग्रहणप्रयत्नस्य कारणम् ? एवं तर्हि मम नेत्रस्पर्शं विना भवतः पितुः अन्धत्वनिवारणं कथम् इति अहं वदामि । तीरात् किञ्चित् सिकताः आनयतु । अहं मम नेत्रेण सिकताः स्पृशामि । ताः सिकताः नीत्वा पितुः नेत्रयोः स्पर्शं कारयतु । तदा सः स्वदृष्टिं पुनः प्राप्स्यति'' इति उक्तवान् ।

तदा सः बालकः – ''तथैव भवतु । भवतः कथनानुसारमेव आचरामि । किन्तु यदि मम पिता दृष्टिं न प्राप्स्यति तर्हि भवान् न जीवति । अहं भवन्तं न भाययामि । हितवचनं वदन् अस्मि यत् भवता स्ववचनं पालनीयम् इति'' इति उक्तवान् ।

स्वर्णमत्स्यः धन्यवादान् अर्पयन् – ''भवतः पिता स्वस्थः भविष्यति निश्चयेन । यदा कदापि मां स्मरतु । अहं भवतः साहाय्यार्थम् उपस्थितः भविष्यामि'' इति उक्तवान् ।

कृषकपुत्रः तीरात् सिकताः स्वीकृत्य स्वर्ण-मत्स्यनेत्राभ्यां स्पर्शं कारितवान् । अनन्तरं त्वरया वृद्धपितुः समीपं गतवान् । सिकताभिः पितुः नेत्रयोः पक्ष्मणी यदा स्पृष्टे तदा झटिति कृषकेण स्वदृष्टिः प्राप्ता । साहसिनः पुत्रस्य मुखे विद्यमानं मन्दहासं द्रष्टुं शक्तः सः । तस्य महान् आनन्दः जातः ।

एतां वार्तां श्रुत्वा इतरे षट् अपि पुत्राः धावन्तः पितरं द्रष्टुम् आगताः । ते विश्वसितुम् अपि न शक्ताः यत् कथं तेषां सहोदरः सफलः अभवत्, दुष्करं कार्यं कथं सः साधितवान् इति । ते परस्परं चर्चाम् आरब्धवन्तः ।

अनुजस्य विषये तेषां मनसि असूया उत्पन्ना । पिता महत्याः सम्पदः उत्तराधिकारि-रूपेण कनिष्ठपुत्रमेव चिनुयात् इत्यपि ते भीताः । अनुजम् विरुध्य ते कुतन्त्रं रचितवन्तः ।

# लोकनृत्यानि



हर्याणाराज्ये जानपदनृत्यानि सन्ति बहूनि । विभिन्नप्रसङ्गेषु विभिन्ननृत्यानि भवन्ति अत्र । तेषु प्रमुखम् अस्ति 'धामाल'नृत्यं, 'डफ'नृत्यं च । यदा कृषिक्षेत्रे फलचयस्य कालः भवति तदा एतादृशानि नृत्यानि सर्वत्र भवन्ति । सामान्यतः होलीपर्वणः पूर्वम् एतादृशानि नृत्यानि आयोज्यन्ते । प्रायः एतादृशं नृत्यं पुरुषाः साम्प्रदायिकवेषं (कुर्ता, धोती, वर्णमयानि उष्णीषाणि च) धृत्वा सार्वजनिकस्थानेषु कुर्वन्ति । धमालनामकस्य पणवस्य तालम् अनुसृत्य एतत् नृत्यं भवति । अपरं लोकप्रसिद्धं लोकनृत्यम् अस्ति 'झुमर'नामकम् । धोलकवाद्यस्य तालानुसारं क्रियमाणम् एतत् नृत्यं महिलाभिः एव क्रियते । झुमरनामकस्य आभरणस्य कारणतः एतस्य नृत्यस्य नाम 'झुमर' इति प्रसिद्धम् । एतत् आभरणं विवाहितमहिलया ललाटे ध्रियते । लूर, रासलीला, गुग्गा, छाटी, फाग इत्यादीनि इतराणि कानिचन अत्रत्यानि लोकनृत्यानि ।



ज्येष्ठभ्राता पितुः समीपम् आगत्य - ''अस्माभिः भगवते धन्यवादाः समर्पणीयाः । यतः तेन भवतः दृष्टिप्राप्त्यर्थं व्यवस्था कृता । किन्तु पितः ! भवता अपेक्षिते स्वर्णमत्स्यनेत्रे कुत्र ? कनिष्ठभ्रात्रा तु भवतः नेत्रयोः उपरि किञ्चित् सिकताः स्थापिताः, तावदेव । तेन भवते या दृष्टिः प्राप्ता सा तु काकतालीया एव'' इति उक्तवान् ।

तावता अपरः पुत्रः - ''एताभिः सिकताभिः अग्रे नेत्रयोः हानिः अपि भवितुम् अर्हति'' इति उक्तवान् ।

तृतीयः पुत्रः - ''तेन स्वर्णमत्स्यस्य नेत्रे आनेतव्ये आस्ताम् । सः अस्मान् सर्वान् वञ्चितवान्'' इति गर्जितवान् ।

षण्णां ज्येष्ठपुत्राणां चातुर्यपूर्णस्य तर्कस्य कारणतः कनिष्ठपुत्रेण गृहात् निर्गन्तव्यम् अभवत् । 'पिता वञ्चितः' इति महती अपख्यातिः प्राप्ता तेन । सः गतिहीनः सन् गृहात् निर्गतवान् । गमनार्थं किमपि स्थानं न आसीत् तस्य ।

एकदा अरण्यमार्गेण गच्छन् सः कस्यचित् शृगालस्य क्रन्दनस्वरं श्रुतवान् ।

शृगालः तं दृष्ट्वा - ''भ्रातः ! मां रक्षतु । मां व्याधाः अनुसरन्तः सन्ति । यदि भवान् मां रक्षेत् तर्हि आवश्यकतायां सत्याम् अहं भवतः साहाय्यं करिष्यामि'' इति अवदत् ।

शृगाले कनिष्ठपुत्रस्य दया उत्पन्ना । सः शृगालम् उद्दिश्य - ''अस्मिन् गर्ते शेताम् । शुष्कैः पर्णैः तृणेन च अहं तं गर्तं पूरयामि । व्याधानां गमनस्य अनन्तरम् अहं भवन्तम् आकारयामि । तदा भवान् बहिः आगन्तुम्



अर्हति'' इति ।

एषः उपायः शृगालाय अरोचत । शृगालः गर्ते शयितवान् । व्याधाः तेन मार्गेण आगत्य कनिष्ठपुत्रं पृष्टवन्तः - ''एतेन मार्गेण गतः शृगालः भवता दृष्टः किम् ?'' इति ।

तदा कनिष्ठपुत्रः मुग्धतां प्रदर्शयन् - ''शृगालः ? कीदृशः भवति शृगालः ? मया न कोऽपि शृगालः दृष्टः'' इति उक्तवान् ।

व्याधाः असहनां प्रदर्शयन्तः– ''एषः मूर्खः शृगालमेव न जानाति । एतेन सह सम्भाषणेन समयः व्यर्थतां गच्छेत् । वयम् अग्रे गच्छाम'' इति उक्तवन्तः ।

व्याधानां निर्गमनस्य अनन्तरं कनिष्ठपुत्रः शृगालम् आकारितवान् । शृगालः धन्यवादान् समर्पितवान् । ''यदा भवान् आपदि भविष्यति तदा मां स्मरतु । भवतः साहाय्यार्थम् अहम्



उपस्थितः भविष्यामि'' इति उक्तवान् च ।

तदा कनिष्ठपुत्रः मन्दहासपूर्वकं - ''मम आपदः विषये चिन्ता मास्तु भवतः । भवान् आदौ स्वरक्षणं चिन्तयतु । व्याधानाम् आगमनात् पूर्वम् इतः निर्गच्छतु'' इति उक्तवान् । ततः गहनारण्यस्य दिशि प्रस्थितवान् ।

अरण्यस्य अनन्तरम् एकं राज्यम् आसीत् । तत् नगरं विशिष्टम् आसीत् । तत्रत्यायाः राजकुमार्याः समीपे विशेषशक्तियुतः कश्चन दर्पणः आसीत् । तस्मिन् दर्पणे सा सर्वं द्रष्टुं शक्नोति स्म । यः तस्मिन् दर्पणे स्वस्य प्रतिबिम्बम् अवरोद्धुं शक्नोति तं सा राजकुमारी परिणेतुम् इच्छति स्म । यः प्रयत्नं कृत्वापि असफलः भवति तस्य शिरच्छेदः क्रियते स्म ।

कनिष्ठपुत्रः प्रासादं परितः कपालानि अस्थीनि च दृष्टवान् । तत् स्थानं शिरच्छेदं प्राप्तवतां युवकानां क्रन्दनैः पूर्णम् अस्ति इति भाति स्म । किन्तु एतस्मात् सः भीतः न अभवत् । सः राजकुमार्या मिलितवान् ।

राजकुमारी अधिकारस्वरेण - ''भवता नियमाः ज्ञाताः सन्ति खलु ?'' इति पृष्टवती ।

तदा कनिष्ठपुत्रः - ''आम् । सर्वविधाम् अपि परिस्थितिं सम्मुखीकर्तुम् अहं सिद्धः अस्मि'' इति उक्तवान् ।

तदा राजकुमारी - ''अस्तु । अद्य रात्रौ कुत्रचित् निलीय तिष्ठतु । श्वः प्रातःकालात् पूर्वम् अहं भवन्तम् अन्विष्यामि चेत् भवतः शिरः ....'' इति वाक्यम् अर्धे एव स्थगितवती । श्वः भवतः मरणं भवितुम् अर्हति इति सूच्यरूपेण तया उक्तम् आसीत् ।

तद्दिने रात्रौ सः युवकः समुद्रतीरं गतवान् । तत्र गत्वा स्वर्णमत्स्यम् आकारितवान् । स्वस्य समस्यां विवृत्य साहाय्यं प्रार्थितवान् ।

तदा सः स्वर्णमत्स्यः - ''एषा समस्या एव न । भवतः गोपनार्थम् अहं योग्यं स्थलं जानामि । भवान् मम उदरे तिष्ठतु । अहं गभीरं सागरं प्रविशामि । कोऽपि तत्र भवन्तम् अभिज्ञातुं न शक्नोति'' इति उक्तवान् ।

तस्मिन् एव समये राजकुमारी दर्पणं स्वीकृत्य सर्वासु दिक्षु भ्रामितवती । किञ्चित्कालानन्तरं सा तं युवकम् अन्विष्टवती । प्रातः यदा सः युवकः राजकुमार्या मिलितवान् तदा सा तेन रहसि स्थितस्य स्थानस्य विवरणम् उक्तवती । अनन्तरं सा - ''भवतः विषये मम कुतूहलम् उत्पन्नम् अस्ति । शिरच्छेदनात् पूर्वम् अहं भवते

# आकर्षणीयानि स्थानानि

उत्तरभारतस्य प्रवेशद्वारम् इति ख्यातम् एतत् हर्याणाराज्यं प्रसिद्धं प्रवासिकेन्द्रम् अस्ति । भारतीयसंस्कृतेः प्राचीनं केन्द्रम् अस्ति कुरुक्षेत्रं, यच्च हर्याणाराज्ये विराजते । हर्याणाराज्यस्य प्रेक्षणीयेषु स्थानेषु अत्यन्तं प्रसिद्धम् अस्ति एतत् । अत्रत्यः ब्रह्मसरोवरः अत्यन्तं पवित्रं स्थानम् अस्ति । सूर्यग्रहणदिने बहवः यात्रिकाः अत्र स्नानं कुर्वन्ति । अस्मिन् सरोवरे यः स्नानं करोति सः सहस्राश्वमेधयागानां पुण्यं प्राप्स्यति इति श्रूयते । एतं सरोवरं परितः बहूनि मन्दिराणि सन्ति । महाभारतयुद्धम् अपि अत्रैव प्राचलत् इति श्रूयते ।

पुनरेकम् अवसरं ददामि'' इति उक्तवती ।

अस्मिन् अवसरे सः युवकः अरण्यं गत्वा शृगालस्य साहाय्यं याचितवान् । तदा शृगालः – ''चिन्ता मास्तु । अहं यथाशक्ति साहाय्यं करिष्यामि'' इति उक्तवान् । अनन्तरं सः सर्वाणि मित्राणि आहूय परिस्थितेः विषये चर्चां कृत-वान् । ते सर्वे मिलित्वा निश्चितवन्तः यत् अरण्यतः प्रासादं यावत् सुरङ्गमार्गस्य खननं करणीयम् इति । प्रासादे राजकुमार्याः मञ्चस्य अधोभागे एव तेन निलीय स्थातव्यम् इति निश्चितम् ।

सर्वं योजनानुसारं प्रवृत्तम् । राजकुमारी पुनश्च सर्वत्र दर्पणं भ्रामितवती, मञ्चस्य अधो-भागं विहाय । सा युवकेन निलीय स्थितं स्थानम् अभिज्ञातुं न शक्तवती । तया बहुधा प्रयत्नः कृतः । किन्तु सा विफला अभवत् ।

अल्पेन एव काले सः युवकः तस्याः पुरतः आगत्य अतिष्ठत् । सा धावन्ती गत्वा – ''युवश्रेष्ठ ! स्पर्धायाम् अहं पराजिता । भवान् जितवान्'' इति उक्त्वा अभिवादनं कृतवती ।

तयोः विवाहसमनन्तरं तौ युवकस्य ग्रामं प्रस्थितवन्तौ । स्वकृत्यविषये पश्चात्तापम् अनुभवन्तः तस्य अग्रजाः अनुजं राजकुमारीं च स्वागतीकृतवन्तः । ''भ्रातः ! अस्मान् क्षाम्यतु । अस्माभिः यत् आचरितं तदर्थं वयं दुःखिताः स्मः'' इति उक्तवन्तः ।

कनिष्ठपुत्रः औदार्येण तान् क्षान्तवान् । पुनश्च तत्कुटुम्बसदस्याः सम्भूय सुखेन वासम् आरब्ध-वन्तः । कनिष्ठपुत्रः स्वराज्यं प्रति पितरम् अपि नीतवान् । सर्वे असूयादिकं विस्मृत्य सुखेन सन्तोषेण च अवसन् ।





# योग्यस्य वरस्य प्रार्थना

भानुमती त्वराशीला गृहीणी । अल्पस्य विषयस्य निमित्तम् अपि सा उद्विग्ना भवति स्म । किन्तु तस्याः पत्युः कमलानाथस्य स्वभावः एतादृशः न । सम्यक् विचिन्त्य निर्णयं करोति स्म सः । मितभाषी सः । यत् उच्यते तत् सुविचिन्त्य वदति स्म सः ।

तयोः पुत्री प्राप्तवयस्का । पुत्र्याः विवाहस्य विषये महती चिन्ता भानुमत्याः । अतः सा कदाचित् पतिम् अवदत् - "पुत्र्याः विवाहः अचिरात् एव निर्वर्तनीयः खलु अस्माभिः ? भवान् तु निश्चिन्तः एतद्विषये । पुत्री तु विंशतिवर्षीया जाता अस्ति । तथापि न कापि चिन्ता भवतः" इति ।

तदा कमलानाथः अवदत् - "मया पुत्र्याः विवाहविषये किमपि न चिन्तितम् एव इति न । योग्यस्य वरस्य अन्वेषणे अहम् अपि उद्युक्तोऽस्मि । त्वरा कृता चेत् कार्यं विनष्टं भवेत्" इति ।

किन्तु भानुमती प्रतिदिनं पुत्र्याः विवाहविषयं पतिं सानुरोधं वदति स्म । किन्तु कमलानाथः तु तत् पुनः पुनः श्रुत्वा अपि मन्दहासपूर्वकं मौनम् अवलम्बते स्म ।

कदाचित् बान्धवानां गृहं गत्वा प्रत्यागता भानुमती पतिम् अवदत् - "किम् एतत् ज्ञायते भवता ? ग्रामस्य शिवालयस्य पार्श्वे कश्चन संन्यासी निवसति एषु दिनेषु इति श्रूयते । वयं यत् प्रार्थयामः तद्विषये यदि सः 'तथास्तु' इति वदति तर्हि कार्यं सिद्धम् एव इति वचनं श्रूयते । किन्तु एकः एव वरः प्रार्थनीयः इति तस्य नियमः इत्यपि श्रूयते । सर्वे ग्रामजनाः तस्य प्रशंसां कुर्वन्ति" इति ।

"भवत्याः मुखात् एव तस्य वचनं शृण्वन् अस्मि । सः ज्ञानी इति भासते । प्रपञ्च-परिचयः सम्यक् स्यात् अपि तस्य" इति हसन् अवदत् कमलानाथः ।

तस्मिन् एव दिने भानुमती तस्य संन्यासिनः समीपं गतवती । तां दृष्ट्वा संन्यासी अपृच्छत् - "किं प्रार्थयितुम् आगता भवती ?" इति ।

एतत् श्रुत्वा भानुमती क्षणकालं स्तब्धा अभवत् । किञ्चित्कालानन्तरं सा अवदत् - ''यदा अहं पतिगृहम् आगता तदा आर्थिकक्लेशः मां बहुधा बाधते स्म । अतः मम जामाता कोट्यधिपतिः भवतु'' इति ।

''किं कोट्यधिपतिता अस्ति चेत् सर्वं सिध्येत् ? यदि सः सन्तानहीनः भवेत् तर्हि तस्य समग्रा सम्पत्तिः अन्याधीना खलु भवेत् ?'' इति अपृच्छत् संन्यासी ।

एतत् युक्तं मन्यमाना भानुमती पुनः किञ्चित् विचिन्त्य अवदत् - ''एवं तर्हि मम जामाता सन्तानवान् भवतु'' इति ।

''सन्तानभाग्यम् अस्ति चेत् किं सर्वं सिद्ध्येत् ? यदि सः प्रेम्णा न व्यवहरेत् तर्हि भवत्याः पुत्र्याः जीवनं दुःखमयं खलु भवेत् ?'' इति पुनः अवदत् संन्यासी ।

''यः मम पुत्रीं प्रेम्णा पश्येत्, तस्याः इच्छाः च पूरयेत्, तादृशं जामातरं ददातु कृपया'' इति प्रार्थितवती भानुमती ।

''सः भवत्याः पुत्रीं प्रीत्या पश्येत्, किन्तु तस्मिन् भवत्याः पुत्री अनुरागवती स्यात् इति नास्ति खलु ? यस्मिन् अनुरागः न भवति तेन सह जीवनं कष्टकरम् एव खलु ?'' इति पुनः अवदत् संन्यासी ।

कीदृशः वरः प्रार्थनीयः इति बहुधा चिन्तितं भानुमत्या । अन्ते सा उक्तवती - ''मम जामाता सुन्दरः भवतु'' इति ।

''किं सौन्दर्यमात्रम् एव पर्याप्तम् ? यदि सः अल्पायुः स्यात् तर्हि सौन्दर्येण को वा लाभः ?'' इति अपृच्छत् संन्यासी ।

''श्रीमन् ! मया किं प्रार्थनीयम् इति न ज्ञायते । श्वः अहं मम पतिं प्रेषयिष्यामि । तस्मै एव वरं ददातु कृपया'' इति उक्त्वा गृहं प्रतिगतवती सा ।

अनन्तरदिने पत्न्याः अनुरोधस्य कारणतः कमलानाथः संन्यासिनः समीपं गतवान् । तं दृष्ट्वा संन्यासी अपृच्छत् - ''वत्स, किम् इच्छति भवान् ?'' इति ।

''सर्वैः अपि प्रकारैः योग्यः पतिः मम पुत्र्या प्राप्येत इति मम इच्छा । अतः तादृशस्य वरस्य दानेन अहम् अनुग्रहणीयः कृपया'' इति प्रार्थितवान् कमलानाथः ।

''तथास्तु'' इति मन्दहासपूर्वकम् उक्तवान् संन्यासी ।



# भारतम् अवगम्यताम्

१. भारतस्य प्रथमं विद्युच्छक्त्याधारितं रेलयानं, यच्च कल्याण-पुणेनगरयोः मध्ये सञ्चारम् अकरोत्, तस्य नाम आसीत् -

अ. कल्याणराज्ञी
आ. पुणे एक्सप्रेस्
इ. दक्षिणराज्ञी
ई. विन्ध्यराज्ञी

२. प्रतिध्वन्युत्पादकः विशालगोलप्रकोष्ठः कुत्र द्रष्टुं शक्यः ?

अ. गोलगुम्बज्भवने (बिजापुरे)
आ. हवामहल्भवने (जयपुरे)
इ. अजन्तागुहासु (ओरङ्गाबादनगरे)
ई. ताजभवने (आग्रानगरे)

३. चलच्चित्रनगरं कुत्र अस्ति ?

अ. नवदेहल्याम्  आ. कानपुरे
इ. हैदराबादनगरे  ई. गवाहातीनगरे



४. एषः कः इति अभिजानन्तु । भारतीयेन केनचित् सह एषः एकं महासाहसकार्यं कृतवान् । एतदीयः पुत्रः अपि तादृशम् एव कृतवान् एषु दिनेषु ।

५. एतस्मिन् चित्रे कश्चन दोषः दृश्यते । सः कः ?




६. एतत् वर्षं भारतीयरेलविभागस्य १५०तमं वर्षम् । एतन्निमित्तकस्य उत्सवस्य आचरणाय एकं चिह्नं स्वीकृतं तेन । तस्य नाम किम् ?

अ. अप्पु  आ. भोलू
इ. चोटू  ई. भालू

*(उत्तराणि अग्रिमे मासे)*

### 'मे'मासस्य प्रश्नानाम् उत्तराणि

*१. शिम्ला ।*
*२. गोदावर्याः ।*
*३. देहलीस्थस्य भारतप्रवेशद्वारस्य (इण्डिया गेट्) पृष्ठभूमिकायां समुद्रः नास्ति । चित्रे दृश्यमानानि समुद्रभवनादीनि मुम्बयीस्थस्य 'गेट् वे आफ् इण्डिया' इत्यस्य ।*
*४. हौरासेतुः । एषः गङ्गानद्याः उपरि अस्ति ।*
*५. शिम्ला ।*
*६. जमशेटपुरम् ।*



# विघ्नेश्वरः

राजा शत्रुञ्जयः चलुकवर्माणं प्रासादात् बहिः प्रेषयन् अवदत् – ''भवान् अस्माकं मध्ये वासं कर्तुं योग्यः न । मूषकवाहने विघ्नेश्वरे भवतः या भक्तिः अस्ति तदनुगुणम् एव अनुरूपजातिका पत्नी प्राप्ता अस्ति भवता । भवतः पत्नी दिने कस्यापि दृष्टि-गोचरतां यथा न गच्छेत् तथा वासाय योग्यं गृहं दीयते भवते । तत्र अनेकानि मूषकबिलानि सन्ति । तदेव योग्यं गृहं भवतः'' इति ।

एतानि वचनानि श्रुत्वा चलुकवर्मा शान्त-स्वरेण अवदत् – ''तात ! पितृत्वधर्मं पालयन् भवान् सर्वेषां पुत्राणां विवाहं निर्वर्तितवान् यत् तत् तु उचितम् एव । पतिपत्नीसम्बन्धः पूर्वम् एव निश्चितः भवति इति श्रूयते । एतादृशे विषये अस्माकं प्रयत्नः कोऽपि फलकारी न भवति । सर्वं विघ्नेश्वरस्य सङ्कल्पस्य अनुगुणम् एव प्रवर्तते'' इति ।

चलुकवर्मा यदा ग्रन्थाध्ययनं करोति तदा तस्य पत्नी चलुका तस्य पार्श्वे एव उपविश्य सर्वं श्रद्धया शृणोति स्म । यदा सः विघ्नेश्वरस्य पूजायां निमग्नः भवति तदा चलुका स्वस्य मुखस्य साहाय्येन पुष्पाणि आनयति । चलुकः स्वस्य भोजनस्य अनन्तरं यत् ददाति तत् खादति सा । एवमेव दिनानि गतानि ।

अथ कदाचित् विनायकचतुर्थी उप-स्थिता । सर्वे गृहाणि वर्णैः अलङ्कृत्य धान्यानि कुट्टयन्तः आसन् । चलुका एकस्यां रात्रौ सर्वान् मूषकान् मेलितवती । ते स्वस्य पुच्छं वर्णपात्रे निमज्ज्य भित्तिषु वर्णं लेपित-वन्तः । स्वदन्तैः व्रीहेः तुषावरणम् अपनीय तण्डुलं सज्जीकृतवन्तः ।

विनायकचतुर्थीदिने चलुकवर्मणः सर्वाः



भ्रातृजायाः जलेन पूर्णान् सुवर्णकलशान् शिरसि स्थापयित्वा नदीं प्रति प्रस्थितवत्यः । एतत् दृष्ट्वा चलुकवर्मा किञ्चित् खिन्नः ।

एतत् ज्ञात्वा चलुका एकं लघुकलशं प्रविष्टवती । तं लुण्ठयन्ती नदीतीरपर्यन्तं नीतवती । नदीतीरे कलशात् बहिः आगत्य सा अचिन्तयत् – 'एषः कलशः महान् । प्रवाहस्य वेगः अपि महान् । अहं कलशं तु कथञ्चित् अत्र आनीतवती । किन्तु कलशस्य जले निमज्जनं, जलस्य नयनं च कथम् इति तु न ज्ञायते । अहं मूर्खा उपयोगरहिता च अस्मि । मम जीवनेन न किमपि प्रयोजनम्' इति । अतः सा स्वशिरः शिलया घट्टयितुम् उद्युक्ता । तावता विघ्नेश्वरः प्रत्यक्षीभूय चलुकायाः शरीरं सकृत् प्रीत्या स्पृष्टवान् । एतस्मात् चलुकायाः सर्वाणि पापानि अपगतानि । सा कल्याणकिङ्किणीनामिकायाः देवकन्यायाः रूपं प्राप्तवती । सा भक्त्या विघ्नेश्वरं साष्टाङ्गं नमस्कुर्वती विविधैः प्रकारैः स्तुतवती । विघ्नेश्वरः कल्याणकिङ्किणीम् आशीर्वादेन अनुगृह्य अन्तर्हितः जातः ।

तदनन्तरं कल्याणकिङ्किणी जलकलशं शिरसि आरोप्य गृहं प्रति प्रस्थितवती । एतत् दृष्ट्वा आश्चर्येण स्तब्धाः सन्तः जनाः परस्परम् उक्तवन्तः – ''एषा देवकन्यका का ? कस्य गृहं गच्छन्ती अस्ति एषा ?'' इति ।

चलुकवर्मणः भ्रातृजायाः तां चलुकवर्मणः गृहं प्रविशन्तीं दृष्ट्वा लज्जां प्राप्तवत्यः ।

राजा शत्रुञ्जयः स्वस्य मूर्खव्यवहारं स्मरन् लज्जां च अनुभवन् चलुकवर्माणं तत्पत्नीं च राजप्रासादं प्रति निमन्त्रितवान् ।

चलुकवर्मणः भ्रातरः पितरम् अवदन् – ''भवता अस्माकम् अपि विवाहः मूषिकया सह किमर्थं न कृतः ? यदि भवता तथा कृतं स्यात् तर्हि वयम् अपि अप्सरसं पत्नीरूपेण प्राप्तवन्तः स्याम'' इति ।

एतत् श्रुत्वा शत्रुञ्जयः अचिन्तयत् – 'एतादृशानां मूर्खाणां कृते मया किमर्थं वा साम्राज्यं संरक्षितम् ?' इति । ततः सः विरक्तिं प्राप्य तपः कर्तुम् अरण्यं प्रति निर्गतवान् ।

एतदनन्तरं चलुकवर्मणः सहोदराः सर्वे कलहं कुर्वन्तः मरणं प्राप्तवन्तः । चलुकवर्मणा निषिध्यमानाः अपि जनाः तं सिंहासने प्रतिष्ठापितवन्तः । चलुकवर्मा दक्षतया शासनं कुर्वन् स्वस्य राज्ये सुखं शान्तिं च प्रतिष्ठापितवान् । स्वयम् अपि सुखेन शान्त्या च जीवनं कृतवान् ।

चलुकवर्मा कल्याणकिङ्किण्याः स्मरणाय

एकं महानगरम् एव निर्मापितवान् । कल्याण-किङ्किणी चतुरः पुत्रान् प्रसूतवती । गच्छता कालेन ते चालुक्याः इति ख्याताः अभवन् । एवं चालुक्यवंशस्य मूलपुरुषस्य चलुकवर्मणः काले वातापिनगरम् अनेकैः मन्दिरैः सुशोभितं जातम् । तत् नगरं कलाकाराणां पण्डितानां च केन्द्रं जातम् । विघ्नेश्वरः नगरस्य अधि-देवतारूपेण मानितः जातः । चालुक्यवंशीयाः चतसृषु दिक्षु स्वराज्यानि संस्थाप्य शासनं कृतवन्तः । तेषां पुत्रपौत्रादयः विविधासु शाखासु विभक्ताः सन्तः शासनम् अकुर्वन् । वातापिनगरस्य शासकाः वातापिचालुक्याः इति ख्याताः जाताः । एवमेव कल्याणीनगरस्य शासकाः कल्याणीचालुक्याः इति ख्याताः जाताः । वेङ्गीनगरशासकाः वेङ्गीचालुक्याः इति ख्याताः जाताः । पूर्वचालुक्याः, पश्चिम-चालुक्याः, सौराष्ट्रचालुक्याः इत्यादयः अपि ख्याताः जाताः । गच्छता कालेन वातापिनगरं 'बादामि' इति नाम्ना ख्यातं जातम् ।

### विघ्नेश्वरसम्बद्धाः अन्याः कथाः

विघ्नेश्वरतीर्थक्षेत्रत्वेन वातापिनगरस्य, वातापिगणपतिरूपिणः विघ्नेश्वरस्य च, ख्यातिः यदा समग्रे देशे प्रसृता आसीत् तदा पावनमिश्रः नाम कश्चन पण्डितः वसति स्म । सः गणपतिमन्दिरे उपविश्य बालान् विघ्नेश्वर-सम्बन्धिनीः विविधाः कथाः श्रावयति स्म । ताः कथाः श्रुत्वा अल्पवयस्काः ज्येष्ठाः चापि मनोरञ्जनं प्राप्नुवन्ति स्म ।

कदाचित् मन्दिरस्य मण्डपस्य भित्तिषु स्थितं किञ्चन विघ्नेश्वरसम्बन्धि चित्रं प्रदर्शयन्



कश्चित् पावनमिश्रम् अवदत् – ''आर्य ! एतत्सम्बन्धिनीं कथां श्रावयतु'' इति ।

तदा पावनमिश्रः कथाम् आरब्धवान् –

कस्मिंश्चित् नगरे सत्यवर्मा लोभगुप्तः चेति उभौ गृहस्थौ प्रतिवेशिनौ आस्ताम् । लोभ-गुप्तस्य वास्तविकं नाम आसीत् यत् लाभगुप्तः इति । किन्तु लोभाधिक्यकारणतः जनाः तं 'लोभगुप्तः' इति निर्दिशन्ति स्म ।

सत्यशर्मा लोभगुप्तः च प्रतिदिनं शिवालयं गच्छतः स्म । सत्यशर्मा मन्दिरस्य गर्भगृहस्य प्रवेशात् पूर्वं विघ्नेश्वरं प्रणमति स्म । तदनन्तरम् एव शिवस्य दर्शनं करोति स्म । किन्तु लोभगुप्तः तु साक्षात् गर्भगृहं प्रविश्य शिवं साष्टाङ्गं प्रणम्य 'लाभेन अनुगृह्णातु' इति दीर्घकालं यावत् प्रार्थयति स्म ।

एकदा सत्यवर्मा शिवं प्रणम्य प्रत्यागच्छन् आसीत् । तस्मिन् एव समये लोभगुप्तः



शिवस्य पूजनाय मन्दिरं प्रविशन् आसीत् । तदा नन्दीश्वरः विघ्नेश्वरम् अपृच्छत् - ''विघ्नेश्वर ! भवतः भक्तः सत्यशर्मा महति कष्टे अस्ति । किं भवान् तस्य साहाय्यं न करिष्यति ?'' इति ।

''अवश्यं करिष्यामि । अद्य सायङ्कालतः पूर्वं तस्य गृहं प्रति सहस्रं रूप्यकाणि प्रापयिष्यामि'' इति अवदत् विघ्नेश्वरः ।

शिलामूर्त्योः वार्तालापं श्रुत्वा लोभगुप्तः परमाश्चर्यं प्राप्तवान् । अल्पम् अपि विलम्बम् अकृत्वा सः साक्षात् सत्यशर्मणः गृहं गत्वा - ''सत्यशर्मवर्य ! धनस्य आवश्यकता महती अस्ति खलु भवतः गृहे । अहं भवते पञ्चशतं रूप्यकाणि दास्यामि'' इति उक्त्वा गृहं गत्वा पञ्चशतं रूप्यकाणि आनीय दत्तवान् ।

तदा सत्यशर्मा अवदत् - ''श्रीमन् ! ह्यः एव भवान् माम् उक्तवान् आसीत् यत् इतःपूर्वं स्वीकृतं धनं वृद्धिसहिततया यदि न प्रत्यर्प्येत तर्हि गृहम् एव वशीकरिष्यामि इति । एवं स्थिते भवत्तः पुनरपि पञ्चशतं रूप्यकाणि प्राप्य कथमहं प्रत्यर्पयेयम् ?'' इति ।

''तत्सर्वं विस्मृत्य एतत् धनम् इदानीं स्वीकरोतु । अद्य सायं भवान् यत् प्राप्स्यति तत् मह्यं ददातु च'' इति उक्तवान् लोभगुप्तः ।

एतस्य श्रवणस्य अनन्तरम् अपि धन-स्वीकरणविषये सन्दिहानः आसीत् सत्य-शर्मा । तदा तस्य पत्नी उक्तवती - ''एतत् स्वीकरोतु । अस्मत्पुत्र्याः विवाहस्य निश्चयं प्रतीक्षमाणाः सन्ति खलु वरपक्षीयाः'' इति ।

सत्यशर्मणः पुत्र्याः निमित्तं योग्यः वरः प्राप्तः आसीत् । वरस्य मातापितरौ वदतः स्म यत् पञ्चशतरूप्यकाणाम् आभरणं दत्तं चेदेव विवाहः अङ्गीकरिष्यते इति ।

एतत्सर्वं स्मरन् सत्यशर्मा अवदत् - ''अद्य सायङ्काले यत् प्राप्येत तस्य दाने मम तु न कोऽपि आक्षेपः । किन्तु अद्य सायङ्कालात् पूर्वं मया किमपि प्राप्येत इति न भाति'' इति ।

तदा लोभशर्मा - ''तद्विषये कापि चिन्ता मास्तु भवतः । आवां प्रतिवेशिनौ । परस्पर-साहाय्यम् आवयोः धर्मः । इदानीं मया धनं दत्तं चेत् सायं यत् प्राप्येत तत् भवान् दद्यात् एव'' इति वदन् पञ्चशतं रूप्यकाणि सत्य-शर्मणे दत्तवान् ।

लोभगुप्तः जानाति स्म यत् सत्यशर्मा दत्तं वचनं परिपालयति एव इति ।

सायङ्कालः आगतः । तथापि सत्यशर्मणा धनं किमपि न प्राप्तम् एव । एतस्मात् भीतः लोभगुप्तः मन्दिरं गतवान् । विघ्नेश्वरमूर्तेः

शुण्डां गृहीत्वा आकर्षन् - ''अये विघ्नेश्वर ! सत्यशर्मणे शीघ्रम् एव सहस्रं रूप्यकाणि दापयतु । अन्यथा ....'' इति यावत् किञ्चित् वदन् आसीत् तावता शुण्डया तदीयः हस्तः गृहीतः जातः । हस्तस्य विमोचनाय लोभशर्मा प्रयत्नं कृतवान् । तदा ग्रहणम् इतोऽपि दृढं जातम् । पीडाम् अनुभवन् लोभगुप्तः हस्त-विमोचनाय प्रयतमानः आसीत् । तदा मूर्तेः अन्तर्भागतः ध्वनिः श्रुतः - ''यावच्छीघ्रं भवान् सत्यशर्मणे सहस्रं रूप्यकाणि दास्यति तावच्छीघ्रं बन्धनात् मुक्तिः भविष्यति'' इति ।

एतत् श्रुत्वा लोभगुप्तः अवदत् - ''हे भगवन् ! एतत् तु सर्वथा अनुचितम् । मया तस्मै एतावता एव पञ्चशतं रूप्यकाणि दत्तानि सन्ति'' इति ।

''एवम् ! पञ्चशतं रूप्यकाणि दत्त्वा सहस्रं रूप्यकाणि स्वायत्तीकर्तुम् इच्छति स्म भवान् ? रे कृपणाग्रेसर ! आत्मना कृतस्य लोभस्य प्रायश्चित्तरूपेण भवता मया उक्तं सर्वं पालनीयम् । आदौ पञ्चशतं रूप्यकाणि देयानि । तस्मै यत् ऋणं दत्तं तत् प्रतिप्राप्तम् इति अङ्गीकरणीयम् । तस्य पुत्र्याः विवाहः स्वव्ययेन स्वगृहे एव निर्वर्तनीयः । एतत्सर्वं कृतं चेदेव मुक्तिः'' इति अवदत् विघ्नेश्वरः ।

लोभगुप्तः स्वपरिवारसदस्येभ्यः वार्तां प्रेषितवान् यत् पञ्चशतं रूप्यकाणि सत्यशर्मणे दातव्यानि इति । ते तथैव कृतवन्तः । सत्य-शर्मणे दत्तं धनं पुनः न पृच्छ्यते इति प्रतिज्ञातं तेन । सत्यशर्मणः पुत्र्याः विवाहस्य समग्रः व्ययः मया एव निरुह्यते इत्यपि प्रतिज्ञा कृता । तदा तदीयः हस्तः शुण्डातः विमुक्तः जातः ।

लोभगुप्तेन योग्यः दण्डः प्राप्तः इति



वदन्तः ग्रामजनाः सन्तोषम् अनुभूतवन्तः ।

एतदनन्तरं लोभगुप्तः सत्यशर्मणः पुत्र्याः विवाहं स्वपुत्रीविवाहम् इव महता वैभवेन निर्वर्तितवान् । तदीया कृपणताबुद्धिः अपगता । अन्याय्येन आर्जितं धनं धर्मकार्यादिषु विनियुक्तं तेन । सः विघ्नेश्वरस्य भक्तः जातः ।

एवं कथां समाप्य पावनमिश्रः सर्वेभ्यः बालेभ्यः विघ्नेश्वरस्य प्रसादं दत्तवान् । तत् आनन्देन खादन्तः बालाः नृत्यन्तः कूर्दमानाः च गृहं गतवन्तः ।

अनन्तरदिने सायङ्काले एका बालिका अपरं चित्रं प्रदर्श्य उक्तवती – ''आर्य ! एतत्सम्बद्धां कथां श्रावयतु कृपया'' इति । तदा पावनमश्रः अपरां कथाम् आरब्धवान् ।

कल्याणीनगर्यां कलहकण्ठी नाम काचित् धनिकमहिला आसीत् । सा स्वस्नुषां बहुधा पीडयित्वा गृहात् निष्कासितवती । स्नुषा मातृगृहतः अधिकानि आभरणानि न आनीतवती इत्येतदेव एतस्य कारणम् आसीत् ।

कलहकण्ठ्याः स्नुषा सौदामिनी दुःखेन पतिगृहात् निर्गतवती । मातृगृहं प्रति गच्छन्ती सा मार्गभ्रष्टा सती किञ्चन अरण्यं प्राप्तवती । बुभुक्षां पिपासां च सोढुम् अशक्ता सा कस्यचित् वृक्षस्य अधः पतितवती ।

सा अचिन्तयत् – 'मातृगृहं प्रति गमनेन न किमपि प्रयोजनम् । विवाहसमये आभरणानां निमित्तं कृतम् ऋणम् एव इतोऽपि न समाप्तम् । एवं स्थिते पुनरपि आभरणानां निमित्तम् ऋणं कथं कुर्यात् सः ? अतः एतस्मिन् घने अरण्ये मरणम् एव वरम्' इति ।

सौदामिनी एवं यदा चिन्तयन्ती आसीत् तदा कस्यश्चित् वृक्षस्य कपित्थफलं पतितम् । तत् तस्याः समीपम् आगच्छत् च । सौदामिनी तत् हस्तेन स्वीकृतवती । तावता कश्चन गजः धावन् तस्याः समीपम् आगतः ।

सौदामिनी आ बाल्यात् एव विघ्नेश्वरे भक्तिमती आसीत् । सा विघ्नेश्वरं स्मरन्ती गजस्य पादयोः अधः पतनाय अग्रे गतवती । किन्तु तावता गजः गमनं स्थगितवान् ।

सः गजः शुण्डया सौदामिन्याः हस्ते स्थितं कपित्थफलं स्वीकृतवान् । आशीर्वाद-दानभङ्ग्या तत् सौदामिन्याः शिरः परितः भ्रामयित्वा शुण्डया सौदामिन्याः हस्तं गृहीत्वा कस्याश्चित् गुहायाः समीपं नीतवान् ।





# ताम्रनाणकवान्

पर्वतनामकः वामनपुरस्य निवासी । सः दुराशाग्रस्तः । सः सर्वदा अतृप्तः एव दृश्यते स्म । तेन जीवने महती सम्पत् आर्जिता । तथापि तस्य मनः इतोऽपि सम्पदं वाञ्छति स्म । तदर्थं सः नगरं गन्तुम् इष्टवान् । स्वेन सह आगन्तुं पार्श्वगृहस्थं प्रतापमपि प्रेरितवान् ।

प्रतापः न दुराशः । सर्वदा तृप्त इव लक्ष्यते स्म । सः अल्पतृप्तः अपि । अतः तस्य मनः ग्रामे एव सुखेन उषितुम् इच्छति स्म । किन्तु पर्वतस्य वचनं निराकर्तुमपि तस्य मनः नाङ्ग्यकरोत् । अनिच्छया एव पर्वतेन सह प्रस्थितः सः ।

उभौ अपि पद्भ्यां गच्छतः स्म । मार्गे कुत्रचित् तौ नष्टसंज्ञं कञ्चित् संन्यासिनं दृष्टवन्तौ । पर्वतः पतितं तं दृष्ट्वा चिन्तितवान् - 'अस्य साहाय्यकरणात् व्यर्थं दुःखम् अनुभवितव्यम्' इति । किन्तु प्रतापः एतं विचारं नाङ्गीकृतवान् । सः समीपे स्थितात् सरोवरात् अञ्जलिना एव जलम् आनीय संन्यासिनः मुखे सिक्तवान् । संन्यासी सचेतनतां लब्ध्वा तौ दृष्ट्वा उक्तवान् - ''भवद्भ्यां मम महान् उपकारः कृतः । अतः अहमपि भवतोः साहाय्यं कर्तुम् इच्छामि'' इति ।

''स्वयं विसंज्ञः सन् पतितः भवान् आवयोः कीदृशं साहाय्यं कर्तुं शक्नुयात् ?'' इति अपहासपूर्वकम् उक्तवान् पर्वतः ।

''मम समीपे महिमयुतं मञ्जूषाद्वयम् अस्ति । तयोः एका प्रतिदिनम् एकां सुवर्णमुद्रां ददाति । अन्या प्रतिदिनम् ताम्रनाणकमेकं ददाति । नियमपालनपूर्वकम् अनयोः उपयोगं कर्तुम् अहम् असमर्थः अस्मि । तदर्थम् अहं योग्य-व्यक्त्याः अन्वेषणे निरतः अस्मि । मम एषा परिस्थितिः न वास्तविकी, अपि तु बुद्ध्या कल्पिता । बहवः जनाः विसंज्ञं मां दृष्टवन्तः ।

महर्षिः

किन्तु साहाय्यं कर्तुम् एकोऽपि न उत्सुकः अभवत् । भवन्तौ एव साहाय्यम् आचरितवन्तौ । भवतोः मध्ये यः माम् अधिकेन आदरेण सत्कृतवान् सः प्रथमं मञ्जूषां चेतुम् अर्हः । किन्तु एतत् सर्वदा स्मर्तव्यम् यत् भवद्भ्यां मम उपकारः यावान् कृतः तावदेव प्रतिफलं लभ्यते इति'' इति उक्तवान् सः संन्यासी ।

पर्वतः इदानीं चिन्तामग्नः, यतः प्रतापः सुवर्णनाणकानां दात्रीं मञ्जूषाम् इच्छेत् इति । किन्तु प्रतापः एवम् उक्तवान् – ''भवादृशानां साहाय्यदानं मम कर्तव्यम् । प्रतिफलं लभ्यते इति मया न कृतम् । तथापि भवता दीयमानस्य तिरस्कारम् अपि मम मनः न अङ्गीकरोति । मम अत्र आगमनस्य कारणीभूतः अस्ति – एष पर्वतः एव । अतः पर्वतः एव आत्मना इष्टां मञ्जूषाम् आदौ चिनोतु'' इति ।

अस्य वचनेन सन्तुष्टः पर्वतः सुवर्णनाणकस्य मञ्जूषामेव चितवान् । संन्यासी तस्मै तां मञ्जूषां ददत् उक्तवान् – ''अस्य प्रतापस्य स्नेहं कदापि मा त्यजतु । अस्य स्नेहः भवतः भाग्यमिति चिन्तयतु । एतादृशस्य सज्जनस्य सहवासं कदापि न त्यजतु'' इति ।

पर्वतः प्रतापः च संन्यासिनः आशीर्वादं प्राप्य अग्रे गतवन्तौ । तावता एव पर्वतेन मञ्जूषातः एकं सुवर्णनाणकं प्राप्तम् आसीत् । एवमेव प्रतापेन अपि मञ्जूषातः एकं ताम्रनाणकं प्राप्तम् आसीत् । दिनद्वयाभ्यन्तरे तौ नगरं प्राप्तवन्तौ । तदा पर्वतः प्रतापम् अवदत् – ''इतःपरं आवयोः सहगमनं न उचितम् । मम समीपे सुवर्णनाणकानां सङ्ग्रहः भविष्यति । तेषां रक्षणार्थमेकं गृहं, कश्चन



सेवकश्च अपेक्षितः । भवतः ताम्रनाणकानि इति कारणात् यत्रकुत्रचिदपि भवतः वासः शक्यते । अपायसम्भवः नास्ति भवतः । मम इच्छानुसारमेव जीवनं मया प्राप्तम् । भवान् अपि इच्छानुगुणं जीवनमेव प्राप्तवान्'' इति ।

एवम् उभावपि भिन्नं मार्गम् आश्रितवन्तौ । वर्षत्रयम् अतीतम् । पर्वतः सुन्दरमेकं भवनं निर्माय सुखेन जीवनं यापयति स्म । किन्तु प्रतापः महता श्रमेण कार्यं कुर्वन् जीवनयापनं करोति स्म । तस्य जीवनं कष्टमयम् आसीत् । सः आत्मना प्राप्यमाणानि ताम्रनाणकानि सङ्गृह्य कस्मिंश्चित् स्यूते संस्थाप्य तं स्यूतं प्रकोष्ठे स्थापितवान् । तस्य मनसि एका एव इच्छा आसीत् यत् मया सर्वदा अन्येषां साहाय्यं करणीयम् इति ।



प्रतापेन प्रकोष्ठे स्थापितः सः नाणकस्यूतः सर्वेषां चर्चाविषयः सञ्जातः । कदाचित् चौर्यं कर्तुम् आगतः कश्चन चोरः तस्मिन् स्यूते ताम्रनाणकानि दृष्ट्वा नितराम् आश्चर्यचकितः । तेषां नाणकानाम् एकस्मिन् पार्श्वे ब्रह्म-विष्णु-महेश्वराणां चित्रम्, अन्यस्मिन् पार्श्वे सरस्वती-लक्ष्मी-पार्वतीनां चित्रं च आसीत् । एतादृशानि नाणकानि पश्यन् स चोरः एतानि मन्त्रितानि इति विचिन्त्य भीतः सन् तानि नाणकानि प्रतापाय प्रत्यर्प्य तस्य क्षमां याचितवान् ।

तदा प्रतापः तम् उक्तवान् - ''भगवतः शापात् भीतः भवान् एतानि नाणकानि मह्यं प्रत्यर्पितवान् । सर्वेषु प्राणिषु अपि भगवान् अस्ति । अतः एतादृशं चौर्यकार्यं त्यक्त्वा परिश्रमेण धनं सम्पाद्य सुखी भवतु'' इति ।

ततः आरभ्य चोरे महत् परिवर्तनं जातम् । ताम्रनाणकानां प्रभावः एव चोरे जातस्य परिवर्तनस्य कारणम् इति सर्वान् उक्तवान् प्रतापः ।

ताम्रनाणकेषु महिमा अस्ति इति वार्ता क्रमेण ग्रामे सर्वत्र प्रसृता । अतः अनेके जनाः दूरात् अपि आगत्य स्वसमस्याः वक्तुम् आरभन्त । आगताः सर्वेऽपि तं नाणकस्यूतम् स्पृष्ट्वा प्रतिनिवर्तन्ते स्म । अनेन सर्वेषामपि समस्याः परिहृताः अभवन् इति वार्ता बहुदूरं गता ।

प्रतापस्य ताम्रनाणकेषु जनानां विश्वासः क्रमेण अधिकः अभवत् । रुग्णाः अपि आगत्य नाणकस्पर्शेन रोगविमुक्ताः अभवन् । प्रतापः इदानीं कष्टमय्या परिस्थित्या विमुक्तः सन् सुखं प्राप्नुवन् आसीत् । प्रतापस्य योगक्षेमभारं वोढुं बहवः धनिकाः स्वयम् अग्रे आगताः आसन् ।



पर्वतः प्रतापस्य ख्यातिं श्रुतवान् । ताम्रनाणकमञ्जूषावता प्रतापेन यावती प्रसिद्धिः प्राप्ता तावती प्रसिद्धिः तेन न प्राप्ता आसीत् । अतः तस्य मनः असूयया ग्रस्तं जातम् ।

कदाचित् प्रतापेन सह मिलितः पर्वतः तम् उक्तवान् – "भवतः समीपे स्थितेषु ताम्रनाणकेषु महिमा अस्ति उत न इति न जानामि अहम् । परन्तु जनेषु विश्वासः उद्भूतः यत् तेषु महिमा अस्ति इति । अतः ते भवतः प्रशंसां कुर्वन्तः सन्ति । किन्तु तैः नाणकेषु कोऽपि महिमा नास्ति इति यदा ज्ञास्यते तदा भवतः सर्वनाशः निश्चितः एव । अतः यत्र अस्य नाणकस्य महिमानं जनाः न जानीयुः तादृशं स्थलं प्रति भवतः गमनं वरम्" इति ।

प्रतापः पर्वतस्य सूचनया सन्तुष्टः सन् उक्तवान् – "जनाः मां नाशयेयुः इति मम भीतिः नास्ति । किन्तु परिश्रमेणैव जीवनं यापनीयमिति मम इच्छा" इति उक्त्वा तद्दिने रात्रौ एव तत् नगरं त्यक्त्वा गतः एव ।

प्रतापः कुत्रचित् वासम् अरब्धवान् । तत्रत्यः राजा अग्निसेनः इति । तस्य पत्नी ज्वालामुखी बहुभ्यः दिनेभ्यः रुग्णा आसीत् । तस्याः रोगः कः इति राजवैद्याः अपि न ज्ञातवन्तः । महता प्रयत्नेनापि राज्ञ्याः रोगः न शान्तः ।

संन्यासिना एषा वार्ता ज्ञाता । सः राजभवनं गत्वा राजानम् अवदत् – "राजन् ! भवतः पत्नी अनारोग्येण पीडिता इति मया श्रुतम् । अस्य रोगस्य निवारणोपायम् अहं वदामि । येषु नाणकेषु ब्रह्मविष्णुमहेश्वराणां, तत्पत्नीनां च चित्राणि भवन्ति तादृशानि नाणकानि एकस्मिन् पात्रे स्थापनीयानि । तत् पात्रं जलेन पूरणीयम् । तेन जलेन यदि राज्ञी स्नानं करिष्यति तर्हि सा स्वस्था भविष्यति ।

तादृशानि नाणकानि प्रतापनामकस्य कस्यचन सज्जनस्य समीपे सन्ति । सः श्वः अत्र आगमिष्यति'' इति ।

मार्गे संन्यासिनः दर्शनं प्राप्तवान् प्रतापः । तत्र स्वस्य आगमनस्य कारणं विवृतवान् सः । संन्यासी अपि राज्ञ्याः अस्वास्थ्यम् उक्त्वा 'तत्र गच्छतु' इति सूचितवान् ।

नगरं गत्वा राज्ञः दर्शनं कृत्वा प्रतापः संन्यासिनः सूचनानुगुणम् एव महाराज्ञ्याः चिकित्सां कृतवान् । ततः सः अङ्गाराणि आनाय्य तस्मिन् नाणकसहितं तं स्यूतं क्षिप्तवान् । केषुचित् एव क्षणेषु राज्ञी स्वस्था अभवत् । अनेन सन्तुष्टः राजा प्रतापम् उक्तवान् – ''भवान् किमिच्छति ? भवता यत् प्रार्थ्यते तत् दातुम् अहं सिद्धः'' इति ।

तदा प्रतापेन उक्तम् – ''महाराज ! परिश्रमेण यत् धनं प्राप्यते तेनैव अहं जीवितुम् इच्छामि । अन्या कापि इच्छा नास्ति मम । ताम्रनाणकमञ्जूषायाः कारणतः तादृशात् अवसरात् अहं वञ्चितः आसम् । अत एव अहं तां मञ्जूषाम् अग्नौ क्षिप्तवान्'' इति ।

प्रतापस्य वचनं श्रुत्वा राजा क्षणं स्तब्धः अभवत् । ततः सः तस्य हस्तौ गृहीत्वा अवदत् – ''अहो, परोपकारे कियान् आग्रहः भवतः ! भवान् निस्स्वार्थी अपि । एतादृशं सत्पुरुषं एतावत्पर्यन्तम् अहं न दृष्टवान् एव । भवादृशाः यदि अधिकारे भवेयुः तर्हि प्रजानां महत् हितं सिद्ध्येत् । भवान् यत्र उषितुम् इच्छति तत्रैव भवन्तम् अधिकारिणं करिष्यामि'' इति ।

प्रतापः एवम् अधिकारी भूत्वा यं प्रदेशम् आगतः तत्रत्याः जनाः तं 'ताम्रनाणकवान्' इत्येव वदन्ति स्म । प्रतापः पर्वतं दृष्ट्वा तस्मै कृतज्ञतां समर्प्य अवदत् – ''भवतः सूचनेनैव अहम् एवं भाग्यवान् जातः'' इति ।

तदा पर्वतः उक्तवान् – ''मया एव कृतज्ञता वक्तव्या । यतः अहं भाग्यवान् अस्मि यत् तस्य कारणं – भवतः उदारता एव । भवान् भाग्यवान् यत् अस्ति तत्रापि भवतः सौजन्यमेव कारणम् । मया चिन्तितम् आसीत् 'धनेन सर्वं प्राप्तुं शक्यम्' इति । किन्तु मम चिन्तनं दोषपूर्णम् इति ज्ञातम् । भवता साधितं यत् सर्वम् अपि परोपकारेण सद्व्यवहारेण च सिद्ध्यति इति । अद्य आरभ्य अहमपि भवतः जीवनशैलीमेव अनुसरिष्यामि'' इति ।





# कोटयधीशः

काश्रीनगरे कश्चन वणिक् आसीत् । सः वाणिज्येन कोटिशः रूप्यकाणि सम्पादितवान् । अतः जनाः तं नवकुबेरः इति वदन्ति स्म । तस्य अपत्यानि अपि बहूनि आसन् । जामातरः अपि गृहे एव आसन् । तान् अपि सः वाणिज्यं सम्यक् पाठितवान् । एवं सः कोटिशः सम्पादितवान् । बन्धुभिः सह वैभवेन जीवनं यापयति स्म सः ।

एषः कुबेरः गृहे उदारः आसीत् । परन्तु परेषां विषये कृपणः । याचकेभ्यः देवालयानां कृते वा धनं दातुं सः न इच्छति ।

कदाचित् कश्चन संन्यासी तस्य गृहम् आगत्य भोजनदानं प्रार्थितवान् ।

तेन कुपितः सः – ''अरे चोर ! गच्छ । कुतः आगतं भवता ?'' इति उक्तवान् ।

''यदि अहं चोरः स्यां तर्हि किमर्थं भिक्षां याचेयम् ?'' इति पृष्टवान् सः संन्यासी ।

तयोः एवमेव किञ्चित्कालं सम्भाषणम् अभवत् । तदा वणिजा चिन्तितं यत् मम समयः व्यर्थः भवति, एतं कर्मकरैः बहिः प्रेषयामि इति । सः तथैव कारितवान् अपि ।

सः संन्यासी बहिः गच्छन् उक्तवान् – ''भोजनदानपर्यन्तम् अहम् कुत्रापि न गच्छामि । अत्रैव उपविशामि'' इति । सायं-पर्यन्तं सः गृहस्य पुरतः एव उपविष्टवान् ।

'भवान् मृतः भविष्यति चेदपि अहम् किमपि न ददामि' इति सः वणिक् उक्तवान् । संन्यासी दिनत्रयं यावत् तस्य गृहस्य पुरतः एव उपविष्टः । तदा तस्य वणिजः बान्धवाः उक्तवन्तः – ''एषः शापं दद्यात्'' इति । तथापि वणिक् न भीतः । सः गृहस्य द्वाराणि पिहितवान् । एकमेव द्वारम् उद्घाटय ततः एव गमनागमनम् आरब्धवान् । कतिपय-दिनानन्तरम् एकदा सः संन्यासी वणिजा न दृष्टः । तदा वणिजा चिन्तितं यत् कुत्रापि सः संन्यासी गतः स्यात् इति । एवं चिन्तयतः तस्य मनसि गर्वः उत्पन्नः – मया पराजयः न प्राप्तः इति । ततः तेन यदा द्वारम् उद्घाटितं

लक्ष्मीनारायणः

तदा पुरतः एव दृष्टिगोचरः जातः सः संन्यासी ।

''एषः मां शनिरिव पीडयन् अस्ति । एतस्य आशयः कः इति पृष्ट्वा आगच्छतु'' इति कञ्चन सेवकं प्रेषितवान् सः वणिक् ।

''अहं भवन्तं किमपि प्रष्टुं न आगतः । वणिजा सहैव मया वार्तालापः करणीयः'' इति उक्त्वा सः संन्यासी तं सेवकं प्रेषितवान् ।

तदा वणिक् पुनः सन्देशं प्रेषितवान् - ''षण्मासपर्यन्तं वार्तालापं कर्तुं मम समयः नास्ति'' इति । सः संन्यासी प्रतिगतः । षण्मासानन्तरं पुनः आगतः । एवमेव वर्षम् अतीतम् । तदा वणिजा चिन्तितं 'मया इदानीं संन्यासिना सह वार्तालापः करणीयः एव, अन्या गतिः नास्ति' इति । अतः सः तम् आकारितवान् ।

संन्यासी आगत्य तम् वणिजम् उक्तवान् - ''अहं पश्यन् एव अस्मि । मायया आवृतः भवान् पत्नीपुत्रादीनां मोहजाले पतितः अस्ति । भवतः नेत्रे तमसा आवृते । नेत्रे उन्मील्य वस्तुस्थितिं जानातु'' इति ।

''आत्मीयान् सर्वान् त्यजतु इति मां वक्तुं किं भवान् एतावन्ति दिनानि अटितवान् ?'' इति संन्यासिनं पृष्टवान् सः वणिक् ।

''एषु कोऽपि भवतः आत्मीयः नास्ति । यावत् भवान् धनार्जने समर्थः भवति तावत् एते सर्वे भवता सह भवन्ति । यदा धनार्जनं कर्तुं न शक्यते तदा भवान् सर्वेषाम् अनादरं प्राप्स्यति । यदि भवान् इच्छति तर्हि अहम् एतम् अंशं सप्रमाणं निरूपयिष्यामि'' इति उक्तवान् सः संन्यासी ।



वणिक् एतत् अङ्गीकृतवान् । तदा सः संन्यासी उपायमेकम् उक्त्वा ततः निर्गतः ।

कानिचन दिनानि अतीतानि । एकदा सः वणिक् रोगपीडितः इव अदृश्यत । सः पत्नीम् आहूय उक्तवान् - ''मम मरणकालः सन्निहितः इति भावयामि । एतावन्ति दिनानि गतानि चेदपि मया पुण्यकार्यं किमपि न कृतम् । मम मरणकालः वर्षानन्तरं यदि अभविष्यत् तर्हि कियत् समीचीनम् अभविष्यत्'' इति । एवं वदन् एव सः विसञ्ज्ञः सन् अधः पतितः । एतत् दृष्ट्वा पत्नी बहु-०धा भीता । सा वैद्यम् आनायितवती । किन्तु आगतेन वैद्येन रोगः कः इति न ज्ञातम् एव । वैद्यः निर्गतः । सः वणिक् संन्यासिनः वचनानुगुणं श्वासं निरुध्य मृतः इव अभिनयं कृतवान् ।

तस्य वणिजः गृहे प्रायः द्विशतं जनाः

आश्रयं प्राप्तवन्तः आसन् । ते सर्वेऽपि तं वणिजं परितः उपविश्य रोदनम् आरब्धवन्तः ।

तेषु केचन उक्तवन्तः – ''मृत्युः कमपि न त्यजति'' इति ।

तदा एव सः संन्यासी तत्र आगतः । सः चषके क्षीरम् आनीय सर्वान् मौनेन स्थातुं सूचयन् उक्तवान् – ''भवत्सु कोऽपि एनम् उज्जीवयितुम् इच्छति चेत् वदतु । अत्र औषधम् अस्ति'' इति ।

वणिजः पत्नी झटिति तस्य संन्यासिनः पादयोः पतित्वा – ''आर्य ! मम आर्यपुत्रं रक्षतु कृपया । यदि भवता सः रक्ष्येत तर्हि भवान् यत् इच्छति तत् अहं दास्यामि'' इति रुदती प्रार्थितवती ।

तदा स संन्यासी – ''मूर्खाः ! यदा मरणकालः आगतः तदा किमपि औषधं कार्यं न कारेति । एतत् औषधम् भवत्सु कोऽपि पिबति चेत् सः सद्यः मृतः भविष्यति । मृतस्य आयुः यावद् अस्ति तेन एषः वणिक् बहुकालं जीविष्यति । यः स्वस्य आयुः अस्मै वणिजे दातुम् इच्छति सः एतत् औषधं पिबेत्'' इति ।

सर्वेऽपि अवचनाः अभवन् । परस्परं पश्यन्तः स्थितवन्तः सर्वेऽपि । किञ्चित्कालं यावत् सर्वान् दृष्ट्वा सः संन्यासी पृष्टवान् – ''कोऽपि एतदर्थं मर्तुं न इच्छति किम् ?'' इति । कस्यापि मुखतः उत्तरं न आगतम् ।

''अहो ! एषः भवतः सर्वान् सुखिनः कर्तुं दिवानिशं कार्यं कृतवान् । धनार्जनाय एव स्वजीवनं व्ययितवान् । मरणानन्तरम् उत्तमं लोकं प्राप्तुं दानादिपुण्यकार्यमपि न कृतवान् । एतादृशाय कोऽपि स्वप्राणान् दातुं न सिद्धः इति तु आश्चर्यदायकः विषयः'' इति उक्तं संन्यासिना ।

''स्वामिन् ! मयि ज्ञानोदयः अभवत्'' इति वदन् सः वणिक् उत्थितवान् । तदा सर्वे आश्चर्येण मूकाः अभवन् ।

तदनन्तरं सः वणिक् स्वगृहे स्थितान् अप्रयोजकबन्धून् निष्कासितवान् । स्वेन आर्जितं धनम् उत्तमकार्याय, दरिद्रेभ्यः च दातुम् उपयुक्तवान् । तथैव विद्यालयस्य चिकित्सालयस्य च निर्माणे साहाय्यं कुर्वन् सः पुण्यकार्येषु अवशिष्टं धनं व्ययीकृतवान् । वाणिज्यं पुत्राधीनं कृत्वा स्वयम् एकान्ते उपविश्य स्वस्वरूपं ज्ञातुं प्रयतमानः सः सन्तोषेण जीवनं यापितवान् ।



**RESERVE YOUR COPY NOW!**

# Junior
## CHANDAMAMA

Do you want your children to sharpen their faculties by working on puzzles?
**Come to Junior Chandamama for loads of puzzles and games.**




Are you looking out for interesting new stories to be read out to the kiddies?
**Pick up a copy of Junior Chandamama, and you'll find them.**





Does your child have a taste for colouring and you want to develop the habit?
**Junior Chandamama is what you must get for your child.**

Special introductory offer to child-subscribers!
**Rs. 100 for 12 issues (instead of Rs. 120)**
Offer closes on June 30, 2003.

**PAGE AFTER PAGE WILL KINDLE YOUR CHILD'S IMAGINATION**

**ISSUE AFTER ISSUE, MONTH AFTER MONTH**

---

## SUBSCRIPTION FORM

Please enrol me as a subscriber of Junior Chandamama. I give below the required particulars:

Name : .................................... Address : ....................................................

.................................................................................... PIN Code : ................................

I am remitting the amount of Rs.100/- (Discounted rate - till June 30, 2003) for 12 issues by Money Order/Demand Draft/Cheque No ................................ on ................................ Bank ........................ branch drawn in favour of Chandamama India Ltd., encashabale at Chennai (outstation cheque to include Rs.25/- towards Bank Commission).

Place : ....................

Date : ....................

Signature

चन्दमामायाः प्रस्तुतिः

# अजेयः गरुडः

25

चित्रं - महेशः

सर्पदिशस्थः नरेन्द्रदेवः तान्त्रिकस्य आदेशानुसारम् आदित्यस्य बन्धनाय चन्द्रपुरीं प्रति प्रस्थितः । मध्येमार्गं नौका जले निमग्ना । बहवः प्राणैः वियुक्ताः जाताः । नरेन्द्रदेवस्य अङ्गानि भग्नानि । सर्पदिशम् आगतः आदित्यः गुहां प्रवेष्टुं समर्थः भवति । तदीयाः जनाः तान्त्रिकस्य शिष्यान् गृहीत्वा बध्नन्ति । तान्त्रिकः शिष्यान् आह्वयति । किन्तु न किमपि उत्तरं प्राप्यते तेन ।

यदा आदित्यः गुहायाः अन्तर्भागं गन्तुम् उद्युक्तः तदा तान्त्रिकः एव बहिरागच्छन् दृष्टः तेन । रवीन्द्रदेवः कश्चन आप्तपुरुषः च तम् अनुसरतः स्म ।

तान्त्रिकः मां यथा न पश्येत् तथा स्थातव्यं मया ।

आदित्यः तान्त्रिकस्य सम्मुखीकरणाय एकां रणनीतिं मनसि अकलयति ।

रवीन्द्रदेवम् एकम् एव गृह्णन्तु । अहम् अनन्तरं तान्त्रिकं सम्मुखीकरिष्यामि ।

अहो, आश्चर्यम् ! न कोऽपि दृश्यते अत्र !

ते सर्वे आदित्यं द्रष्टुं गतवन्तः स्युः ।

अस्तु आर्य ! यथा भवतः आज्ञा तथा करिष्यामः ।

यत्र अग्निकुण्डः आसीत् तत्र एकं प्रभामण्डलं दृश्यते । तत् वर्धते स्म अपि । एतत् दृष्ट्वा तान्त्रिकः आश्चर्यचकितः ।

आदित्यस्य आदेशानुसारं केचन आदिवासिनः रवीन्द्रदेवं बध्नन्ति ।

माम् अग्निकुण्डसमीपं नयन्तु भवन्तः ।

असाधारणं प्रभामण्डलम् ! किम् एतत् शुभलक्षणं न ?

तान्त्रिकः स्वशिष्यान् पुनः अपि आह्वयति ।

ते सर्वे कुत्र वा अदृश्यतां गताः स्युः ?

किम् एतत् ? अत्र सैनिकाः कथम् ?

आदित्यस्य अङ्गरक्षकाः रवीन्द्रदेवं कञ्चित् आप्तपुरुषं च आक्रामन्ति । आप्तपुरुषः आश्चर्यचकितः भवति ।

कः भवान् ? किम् इष्यते भवता ?

अहं कः इति किं भवन्तः जानन्ति ? इतः निर्गच्छतु तावत् ।

भवता अस्माभिः सह गन्तव्यम् अस्ति महानुभाव ।



नागबन्धुः आदित्यः च ऐदम्प्राथम्येन अभिमुखम् आगच्छतः ।
भवान् एव आदित्यः ?
आम्, अहमस्मि आदित्यः । माम् एव खलु भवान् अन्विष्यन् आसीत् ?
सम्प्राप्तोऽयम् ।




तान्त्रिकस्य आश्चर्यं न जातम् । आदित्यस्य मेलनं सम्भावितम् एव आसीत् इति सः व्यवहारेण दर्शितवान् ।
एषा आरम्भदशा । अहं भवन्तं स्मारयामि । इतः निर्गमनं वरम् ।
अहम् अपि एतस्य दिनस्य प्रतीक्षां कुर्वन् आसम् ।
इदानीं किं भवेत् ?




अकस्मात् तान्त्रिकः भयानकाकृतिं प्राप्नोति । अग्निं वमतः त्रिशिरस्कस्य सर्पस्य रूपं प्राप्नोति सः ।
आदित्य !!
भवतः अन्तिमः क्षणः सन्निहितः अस्ति आदित्य !
आदित्य !!
आदित्य !!

आदित्यस्य उष्णीषे स्थितः पिञ्छः भयजनकस्य पक्षिणः आकारं प्राप्नोति ।

आदिवासिनः अङ्गरक्षकाः च भयेन कातरतया च एतत् दृश्यं पश्यन्ति । ज्योतिर्मयस्य गरुडस्य, भयङ्करस्य सर्पस्य च सङ्घर्षस्य आरम्भः भवति ।

अल्पे एव काले युद्धं तीव्रतां प्राप्नोति । गरुडः स्वनखैः सर्पस्य ग्रहणे समर्थः भवति । स्वस्य पक्षौ सशब्दं चालयन् सः ...

आकाशे उड्डयनं करोति । गुहायाः मन्दिरस्य च उपरि सकृत् परिक्रम्य झटिति अधः आगत्य सर्पम् अग्निकुण्डे बलात् पातयति ।

*अनुवर्तते*

# कालोऽयं विनोदस्य

सिण्डरेल्ला कूष्माण्डशकटे उपविश्य विनोदयात्रार्थं प्रस्थिता अस्ति । केचन अन्ये अपि प्राणिनः तया सह गन्तुम् उद्युक्ताः सन्ति । ते के इति किम् अभिज्ञातुं शक्नुयुः भवन्तः ?



मुन्नी दर्पणे दोलाम् अधिरूढवती दृश्यते । किन्तु उभयोः चित्रयोः अष्ट भेदाः परिदृश्यन्ते । किं तान् अभिज्ञातुं शक्नुयुः भवन्तः ?





मुञ्जी अपरम् अपि स्वप्नं दृष्टवती अस्ति । स्वप्नदृश्ये किं प्रवर्तते इति द्रष्टुम् इच्छति रिङ्कूमूषकः । स्वप्नलोकं प्रति गमनाय किं तस्य साहाय्यं कुर्युः भवन्तः ?

(उत्तराणि ६६तमे पृष्ठे)






मुञ्जी तल्पे शयाना सुन्दरं स्वप्नं पश्यन्ती अस्ति । तया यत् दृष्टं तत्र वर्णं योजयन्तः वयं तं स्वप्नं वर्णमयं कुर्याम ।



लिख्यतां शीर्षिका

# चित्रशीर्षिकास्पर्धा



Souva



Mahantesh C. Morabad

**उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

युक्ता शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते ।
पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

**'एप्रिल्'मासस्य चित्रशीर्षिकाप्रेषकः -**
**नारानाथ कलबाग**
*४/२०१ चेरीश होम्स्, स्वामी विवेकानन्द नगर*
***विरार - ४०१ ३०३***

**पुरस्कृतशीर्षिका**



**रक्तोऽयं पुस्तकाध्ययने**
**रमते इयं क्रीडनकेन**

**मनोविनोदस्य उत्तराणि - (पृ. ६४,६५)**

सिण्डरेल्लया सह गच्छन्तः प्राणिनः एते ।



**अष्टौ भेदाः एते** - मुख्याः कर्णाभरणम्, तस्याः केशपट्टिका, वृक्षस्य शाखाखण्डः, ऊर्ध्वस्थ-पक्षिणः पक्षस्य आकारः, सर्पस्य पुच्छम्, सर्प-शरीरस्थानि कालकानि, मेघस्यैकस्य अदृश्यता, अधोभागस्थपक्षिणः पिच्छानि च ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Viswam

